# विंशशतकस्थजैनाचार्याणां कविमनीषिणां च संस्कृतविषयकं योगदानम्

लेखकः
डॉ. राजेन्द्र चिन्तामणी जैनः

प्रधानसम्पादकः
प्रा. श्रीनिवास वरखेडी
मा. कुलगुरुः, क.का.सं.वि., रामटेकम्



कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयः
रामटेकम्–441106, जि. नागपुरम्

**शीर्षकम्**

**विंशशतकस्थजैनाचार्याणां कविमनीषिणां च संस्कृतविषयकं योगदानम्**

(Research work produced with the Research grant from Kavikulaguru Kalidas Sanskrit University)

**ग्रंथकर्ता**

**डॉ. राजेन्द्र जैनः**

सहायकप्राध्यापकः, साहित्यविभागः, क.का.सं.वि., रामटेकम्

**प्रधानसम्पादकः**

**प्रा. श्रीनिवास वरखेडी**

मा. कुलगुरुः, क.का.सं.वि., रामटेकम्

**सम्पादकः**

**प्रा. मधुसूदन पेन्ना,**

निदेशकः, संशोधनं प्रकाशनञ्च



**प्रकाशकः**

**कुलसचिवः,**

कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयः, रामटेकम् – 44110

**प्रकाशन वर्षम् – 2018**

**आवृत्तिः – प्रथमा**

ISBN – 978–93–85710–15–5

(E-book as well as printed)

**मूल्यम् –**

**मुद्रापकः**

**अवधूत ग्रॉफिक्स अॅण्ड प्रिन्टींग,**

**रामदासपेठ, नागपूर**

## प्रतिज्ञापनपत्रम्

ग्रन्थेऽस्मिन् वर्णिताः विचाराः पूर्णांशेन लेखकरूपेण मदीया वर्तन्ते । कविकुलगुरु–कालिदास–संस्कृत– विश्वविद्यालयस्य प्रशासनेन सह तेषां कोऽपि सम्बन्धः नास्ति इति अहं लेखकरूपेण अत्र प्रतिजानामि स्वीकरोमि च।

लेखकः

**डॉ. राजेन्द्र चिं. जैनः**

सहायकप्राध्यापकः

# कुलगुरुवाचः

संशोधनं कस्यापि विश्वविद्यालयस्य प्रगतिमूलत्वेन परिगण्यते । नवसंशोधनद्वारा समाजोपयोगि–संशोधनकर्मणि विश्वविद्यालयाः सदा प्रवृत्ताः भवन्तु तथा राष्ट्रनिर्माणे समाजहिते च पुरोगतिर्भवतु इति धिया कविकुलगुरु कालिदास संस्कृतविश्वविद्यालयद्वारा संशोधनक्षेत्रे नवाः उपक्रमाः आरब्धाः। छात्रेषु संशोधनस्य गुणवत्तां वर्धयितुं छात्रवृत्तिरारब्धा। अध्यापकेषु संशोधनप्रवृत्तिवर्धनार्थं लघुशोधप्रकल्पानां कृते विश्वविद्यालयेन आर्थिकानुदानस्य एष प्रकल्पः पूर्वकुलगुरोः आचार्य उमा वैद्यायाः काले समारब्धः।

एतेनार्थिकानुदानेन प्राध्यापकैः कृतस्य लघुसंशोधनस्य फलरूपेण ग्रन्थाः पञ्च सिद्धा जाताः । अधुना ते विश्वविद्यालयद्वारा प्रकाश्यन्त इति अत्यन्तं मोदावहो विषयः । तत्रान्यतमोऽयं **''विंशशतकस्थजैनाचार्याणां कविमनीषिणां च संस्कृतविषयकं योगदानम्''** नामकः ग्रन्थः **डॉ. राजेन्द्र जैनः** इत्यनेन प्रणीतः। एतदर्थमहम् एतां संशोधक– प्राध्यापकं भृशम् अभिनन्दामि ।

एतादृशेन संशोधनेन नूनमेव शोधक्षेत्रे विश्वविद्यालयस्य गणनीयं स्थानं भविष्यतीति मे विश्वासः। इतः प्राप्तप्रेरणा अन्ये च संशोधने प्रवर्तेरन् इति अपि आशासे ।

भवदीयः

दि. 09.01.2019

**आचार्यः श्रीनिवासः वरखेडी**

कुलगुरुः

# समर्पणम्

जैनपरम्परानुसारं जगदिदं अवसर्पिण्युत्सर्पिणीभ्यां द्विविधकालाभ्यां चक्रीभूतं प्रवर्तमानं विद्यते। अवसर्पिणीकालस्य दुखमे'ति कलियुगरूपेऽस्मिन् पञ्चमे काले तत्रापि विंशशतके, जम्बुद्वीपे भरतवर्षे आर्यखण्डे भारतदेशे जैनाचार्यपरम्परा प्रथमाचार्यरूपेण ऐदम्प्राथम्येण चारित्रचक्रवर्ती-आचार्यशान्तिसागराख्येन आचार्यप्रवरेण समुज्जीविता किञ्च, उत्तरवर्तिनामपि जैनाचार्याणां मार्गप्रशस्तिकरं मौलिकं कर्म आचार्यप्रवरेण विहितम् इत्यत्र नास्ति कस्यापि विप्रतिपत्तिः। पूर्वचिरकालात्खण्डितायाः जैनसाधुपरम्परायाः यथावत्प्रवर्तने आचार्यप्रवरस्यास्य विंशशतके महत्त्वपूर्णं स्थानं वर्तते। भारतदेशे विविधप्रकारिण्यां राजव्यवस्थायां जैनसाधुपरम्परायाः अक्षुण्णता प्रायशः एकादशशतकादनन्तरं विंशशतकारम्भं यावद् खण्डितैव आसीत्। शास्त्रोक्तदिशा साधुपरम्परा आचार्यप्रवरेण चारित्रचक्रवर्तिनाऽनेन शान्तिसागरेण पुनरारब्धेति कृत्वा विंशशतके उत्तरवर्तिनाम् आचार्याणां तल्लिखितसाहित्यिकग्रन्थानाम् उत्तरवर्तिसकलजैन-वाङ्मयस्य च सर्जनमूले भवन्त एव मूलप्रेरणास्थानमित्ति कृत्वा **कृतिरियं भवच्चरणारविन्दयोः सादरं समर्प्यते।।**



**तथाच,**

येषाम् अमितकृपाशीर्वचोभिः, वात्सल्यातिशयैश्च यत्किञ्चित् सत्कर्मण्यहं प्रवृत्तः तयोः मातृपित्रोः, गुरुजनानाञ्च चरणकमलयोरियं मम प्रथम-शोधप्रकल्पपुष्पाञ्जलिः सादरं समर्प्यते...

**-राजेन्द्रः जैनः (साहित्याचार्यः)**

# आमुखम्

भारतदेशोऽयम् अद्वितीयसंस्कृतिवाङ्मयपरम्पराभ्यां जगति राजते। अखिलमपि संस्कृत–प्राकृत–पालीभाषासु ग्रथितं भारतीयप्राचीनवाङ्मयं भारते सतामपि विविधमतपरम्पराणां तासु एकरूपतामादधातीति भारतीयवाङ्मयस्यान्यदेशीयवाङ्मयेभ्यः वैशिष्ट्यम्। संस्कृतमिति पदं सुष्ठुकरणे संस्करणे वेत्यर्थे प्रयुक्तत्वाद् भाषाशास्त्रीयदृशा निर्दुष्टवाङ्मयस्य निर्माणं संस्कृतभाषामाध्यमेन जातमिति कारणात् 'संस्कृतिः संस्कृताश्रिता' इति विद्वज्जनसामान्यैः भारते उद्घोष्यते। किञ्च, पुराकालादेव नैकजातिप्रजातिजनसामान्येषु संवादमाध्यमभूताभिः प्राकृतपाल्यादिभारतीयभाषाभिरपि जैनबौद्धमतपरम्परानिष्ठवैदिकेतरवाङ्मये रचनाः विधाय भारतीयसंस्कृतिरियं ततोऽपि दृढीयसी कृता। परिणामतो भारतीयसकलमतपरम्परावादिभिः अल्पाधिकमात्रायाम् उपर्युक्तासु सकलप्राचीनभाषासु वाङ्मयं तत्तत्काले सृष्टम्।

जैनमतपरम्परा तन्निष्ठवाङ्मयं च संस्कृत–प्राकृतोभाभ्यां माध्यमभूताभ्यां भाषाभ्यां भारतीयसंस्कृतिमतितरां रेचेते। तत्रैव 'विंशशतकस्थजैनाचार्याणां कविमनीषिणां च संस्कृतविषयकं योगदान'मिति विषये शोधप्रकल्पप्रबन्धं लिखितुमहमद्य कालिदाससंस्कृतविश्वविद्यालयेन प्रेरित इति आत्मानं संस्कृतवाङ्मयसेवायां सुतरां धन्यं मन्ये।

शोधप्रकल्पप्रबन्धेऽस्मिन् विषयवस्तुविभागदृशा **विभागद्वयं** वर्तते। प्रकल्पप्रबन्धस्य प्रथमविभागे प्रथमाध्यायत्रिकं वर्तते यत्र क्रमशः प्रास्ताविकं, विंशशतकस्थजैनाचार्याणां परिचयः, जैनकविमनीषिणां च परिचयः विशदीकृतो वर्तते। द्वितीयविभागे चतुःपञ्चषट्सु अध्यायेषु प्रथमविभागोक्तविंशशतकस्थजैनवाङ्मयरचयितॄणां विविधसंस्कृतविधासु कृतिपरिचयः योगदानं चोपस्थापितं वर्तते। अन्तिमे सप्तमाध्याये उपसंहारः फलितांशश्च प्रदर्शित इति शोधप्रकल्पप्रबन्धस्य अध्यायगतविषयविभागसंक्षेपो सप्तसु अध्यायेषु विद्यते।

विंशशतकस्य जैनाचार्याणां कविमनीषिणां च किंबहुना तेषां तत्तद्विधासु लिखितानां ग्रन्थकृतीनामपि परिचयपुरस्सरं विवेचनं कर्तुं मया अनालस्येन उद्युक्तं तथापि यदि कुत्रचिद् दोषोऽवलोक्यते चेत् संशोध्य सुधियः प्रवर्तयिष्यन्तीति अपेक्षा। किञ्च कृतिरियं समेषां संस्कृतानुरागिणाम् अध्येतॄणां धियो वर्धनाय सन्तिष्ठेत चेत् नो श्रमसाफल्यं सञ्जातमिति जानीमहे।

**–प्रा.डॉ.राजेन्द्र जैनः (साहित्याचार्यः)**

# सन्दर्भग्रन्थनामसंक्षेपसूचिः

| | | |
|---|---|---|
| आ.पु. | = | आदिपुराणम् |
| का.प्र. | = | काव्यप्रकाशः |
| दयो. | = | दयोदयमहाकाव्यम् |
| नि.श. | = | निरञ्जनशतकम् |
| परि.श. | = | परिषहजयशतकम् |
| वीरो. | = | वीरोदयमहाकाव्यम् |
| श्र.श. | = | श्रमणशतकम् |
| समु.द. | = | समुद्रदत्तचरित्रकाव्यम् |
| सा.द. | = | साहित्यदर्पणः |
| सु.श. | = | सुनीतिशतकम् |
| सुद. | = | सुदर्शनोदयमहाकाव्यम् |

# विषयानुक्रम

# प्रथमोऽध्यायः– प्रास्ताविकम्।

जैनसंस्कृतवाङ्मयं भारतीयसंस्कृतौ मौलिमणिभूतत्वेन राजते। संस्कृतसाहित्यस्य अभिवर्धने वैदिकमतपरम्परया सहैव श्रमणपरम्पराणामपि मौलिकं योगदानं विद्यते। जैनाचार्यैः कविमनीषिभिश्च संस्कृतभाषामाध्यमेन ग्रन्थसाहित्यसर्जनं विधाय संस्कृतसाहित्यपरम्परायाः प्रवर्तनम् अतिप्राचीनकालात् साधितमासीदित्यत्र समेषामैकमत्यम्। अद्य जैनसाहित्यं संस्कृतभाषायाः सर्वविधासु लिखितमुपलभ्यते। जैनागमप्रणेतृभिराचार्यैः प्राकृतभाषेव संस्कृतभाषा अपि साहित्यसर्जने प्रशस्तभाषारूपेणाऽभिमता।[१] जैनसाहित्येतिहासकारस्य मुनिदेवेन्द्रस्य मतमपि उपर्युक्तवाक्यनिर्दिष्टप्रकृतविषयं परिपोषयति। मुनिदेवेन्द्रः स्वरचिते 'साहित्यतथासंस्कृति' ग्रन्थे एवं वक्ति– "जैनजनश्रुतीनामाधारेणापि इदं ज्ञायते यत् जैनसंस्कृतेः प्राचीनसाहित्यं संस्कृतभाषायां लिखितं स्यात् किन्तु परिस्थित्यनुगुणं तत्साहित्यम् अद्यापलब्धम्। तस्यानुपलब्धिकारणेन जैनसंस्कृतिसम्बद्धस्य तत्पुरातनादपि पुरातनसाहित्यस्य किं स्वरूपमस्तीति विषये प्रमाणाभावाद् किमपि वक्तुं न शक्यते।" इत्यनेनापि जैनश्रमणसंस्कृतिपरम्परायां संस्कृतवाङ्मयस्य लेखनम् अध्ययनमध्यापनं च पुराकालादेव जायते स्मेति स्पष्टीभूतं भवति। तथापि तत्तत्स्थितावुपलब्धप्राचीनसाहित्याधारेण जैनसंस्कृतेः प्राचीनतमानाम् आगमादिग्रन्थानां रचनाः पुराकाले प्राकृतभाषायां सञ्जाता। तदत्राऽस्य तात्कालिकं प्रमुखकारणं साधारणमतिधारिणां सकलस्त्रीपुरुषाणां जैनागमस्य सहजज्ञानं प्राकृतभाषया भवत्वित्येव आसीत्।

जैनसंस्कृतेः उपलब्धप्राचीनसंस्कृतग्रन्थरचनासु जैनाचार्यश्रीमतः उमास्वामिनः (प्रथमशताब्दिः) तत्त्वार्थसूत्रम् इति सर्वसमावेशकस्य दर्शनग्रन्थस्य स्थानं प्रधानमिति सकलविज्ञजनाभिमतम्। प्रथमशतके विरचितात् प्रथमजैनसंस्कृतग्रन्थाद् आरभ्य विंशशतकं यावत्

---

[१].सक्कया पायया चेव भाणीईयो होति दोण्णि वा। सरमंउलम्मि गिज्जंते पसत्था इसिभासिया।। अनुयोगद्वारसूत्र–१२७

विविधानां संस्कृतग्रन्थानां रचनाः जैनवाङ्मये सञ्जाताः। सम्भवतः पुरातनकाले वैदिकपरम्परायाः संस्कृतप्रधानवाङ्मयत्वादपि वैदिकमतवादिभिः सह संवादसंस्थापनार्थं शास्त्रचर्चादिसाधनार्थं च जैनाचार्यैः कविमनीषिभिश्च संस्कृतभाषायां साहित्यरचनालेखनस्यारम्भो प्रकर्षेण कृतः। बाहुल्येन श्रीमद्भिः रविषेणादिभिराचार्यैः आधारभूतजैनपुराणानि संस्कृतभाषायां विरचितानि सन्ति। पुराकाले विशेषतो जैनन्यायसम्बद्धानां दर्शनग्रन्थानां रचनाः संस्कृतभाषायां विहिताः। किंबहुना, अद्य धर्म-दर्शन-इतिहास-भूगोल-खगोल-साहित्य-संस्कृति-कला-विज्ञानादिविभिन्नविषयान् जैनसंस्कृतसाहित्यम् आमूलं विशदीकरोतीत्यत्र प्रमुखं कारणं नाम जैनेतरमतवादिभिः सह शास्त्रार्थविजीगिषया चर्चया वा स्वमतपरिपोषणं दुष्टमतकुठाराघातकरणं च सौकर्येण सम्पद्यते स्मेत्येव परिलक्षितं भवति। परिणामतः प्राचीनकालादारभ्य रचितस्य, विशेषतया सप्तमशतकादनन्तरं प्रचूरमात्रायां विरचितस्य अद्यावधिजैनसंस्कृतवाङ्मयस्य भारतीयसंस्कृतिं, भारतीयसंस्कृतवाङ्मयं च प्रति महद् योगदानम् अस्तीति सर्वानुमतं भवति। तदीययोगदानस्य यथोचितमध्ययनम् अद्यतनीयसंशोधकानां कृते महान् विषयः। तदस्माभिः प्रयत्नतः परिपूरणीयो भवतीति धियाऽत्र मया प्रवर्तितम्।

## शोधप्रकल्पप्रबन्धस्य व्याप्तिः-

प्रथमशतकादारभ्य जैनसंस्कृतवाङ्मयस्य ग्रन्थरचनाः तद्विकासश्च भारतदेशे प्रकर्षेण जात इति उपर्युक्तविषयप्रस्तावनेन विशदीभवति। पुरातनकालाद्विरचितस्य जैनसाहित्यस्याध्ययनं तत्तत्कालिकैः विद्वद्भिराचार्यैश्च कृतं विद्यते। पार्श्वनाथविद्यापीठतः प्रकाशितं जैनसाहित्येतिहासस्य विविधविषयाधृताध्ययनस्य प्रकाशनं सप्तसु स्वतन्त्रग्रन्थेषु कारितमिति तत्तत्शोधविधातॄणां भारतीयसाहित्याभिवर्धने महद्योगदानं सङ्गच्छते। परं, इदानींतनविंशशतकस्य जैनसंस्कृतसाहित्यस्य अध्ययनस्य तद्योगदानमूल्याङ्कनस्य च इदानींतन शोधाध्येतृभ्यो महती अपेक्षा इति धिया विंशशतकीयजैनसंस्कृतसाहित्यस्य अध्ययने तद्योगदानमूल्याङ्कने च अत्र

मया प्रकृतत्वमुपलक्षितम्। तथाहि, कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयेन नूतनतया समारब्धायाः Research Promotion Project इति योजनायाः विद्यापीठनिर्धारितप्रकल्पस्वरूपादिनियमानुरूपमस्य ममापेक्षानुरूपस्य प्रस्तुतशोधप्रकल्पप्रबन्धस्य निर्माणं सम्पत्स्यत इति विश्वविद्यालयतोऽहं निर्दिष्टः। सार्धैकवर्षमिते विश्वविद्यालयनिर्धारितकाले विंशशतकस्थजैनसंस्कृतसाहित्यस्य योगदानविषयस्य समग्रतयाऽध्ययनं प्रस्तोतुं प्रभवामीति प्रबन्धव्याप्तिधिया मयाऽत्र प्रस्तुतप्रबन्धे विंशशतकस्थजैनाचार्याणां कविमनीषिणाञ्च संस्कृतविषयकयोगदानमधिकृत्याध्येतुं व्यवसितम्। अत्र प्रकल्पप्रबन्धनाम्नि कालापेक्षिणी प्रबन्धव्याप्तिः 'विंशशतकस्थ'मिति पदेन प्रदर्शिता भवति तत्रैव, साहित्यापेक्षिणी प्रबन्धव्याप्तिः केवलं 'जैनसंस्कृतविषयकं योगदानम्' इत्येवंविधिना उपदर्शिता भवति।

## शोधप्रकल्पप्रबन्धस्य स्वरूपम्–

'विंशशतकस्थजैनाचार्याणां कविमनीषिणाञ्च संस्कृतविषयकं योगदान'मिति प्रस्तुतशोध-प्रकल्पप्रबन्धविषयस्य विशदस्वरूपम् अध्ययनञ्च निम्नलिखितरूपेण प्रदत्तं भवति।–

प्रस्तुतप्रबन्धस्य प्रथमोऽध्यायः विषयप्रस्तावनपरो वर्तते। अध्यायेऽस्मिन् प्रकल्पप्रबन्धस्य प्रास्ताविकं, स्वरूपं, प्रकल्पविषयसम्बद्धप्राग्विहितशोधकार्याणाम् अवस्थितिः, प्रस्तुतप्रकल्पप्रबन्धशोधपद्धतिः, प्रबन्धस्य उपादेयत्वमित्यादयो विषयाः प्रकल्पप्रास्ताविकमाध्यमेन निरूपिताः भवन्ति। तथाच, पुराकालादारभ्य जैनसंस्कृतवाङ्मयस्य स्वरूपं, स्रोतांसि, अवस्थितिः, विकासः, योगदानं चेत्यादयः ये विषयाः कालक्रमानुगुणम् अत्रोपवर्णिताः वर्तन्ते। तेन प्रकल्पप्रबन्धस्य सद्यस्थितौ प्रासङ्गिकत्वम् उपादेयत्वं च ज्ञातुं सहाय्यमाचरितं भवति किञ्च, प्रस्तुतप्रबन्धस्य विषयस्य अर्वाचीनविंशशतकस्य

जैनसंस्कृतवाङ्मयेन सह अन्वयं प्रस्थापयितुं सहाय्यमाचरितं भवति। प्रबन्धस्य द्वितीयोऽध्यायः विषयानुगुणं विंशशतकस्य जैनाचार्याणां परिचयं प्रस्तौति। अत्र जैनाचार्याणामिति पदेन जैनसाधु–उपाध्याय–आचार्यपदशोभावतां गृहस्थेतराणां जैनश्रमणानां ग्रहणं विधेयम्। अध्यायेऽस्मिन्नैव तत्तदाचार्याणां साहित्यिककृतीनां केवलं नाममात्रनिर्देशनं विधाय तासां सर्वाङ्गीणतया विवेचनं उत्तरवर्तिषु अध्यायेषु कृतं विद्यते। द्वितीयाऽध्याये जैनाचार्याणां परिचयानन्तरं, तृतीयाऽध्याये विंशशतकस्थानां जैनकविमनीषिणां सद्गृहस्थानां संस्कृतसाहित्यिकजैनश्रावकजनानां परिचयः विस्तरेण प्रदत्तः। अत्रापि तत्तज्जैनकविमनीषिणां साहित्यिककृतीनां केवलं नाममात्रनिर्देशनं विधाय तासां सर्वाङ्गीणतया विवेचनं उत्तरवर्तिषु अध्यायेषु कृतं विद्यते। चतुर्थ–पञ्चम–षष्ठाध्यायाः साहित्यिककृतीनां परिचयं प्रस्तुवन्ति। द्वितीयतृतीयाध्याययोः परिचायितानां जैनाचार्याणां कविमनीषिणां च विरचितानां मौलिककृतीनां विस्तरेण परिचयः चतुर्थाऽध्याये उपस्थापितः। मौलिकग्रन्थामामयं परिचयः संस्कृतस्य विविधविद्याशाखाऽधारेण साहित्यव्याकरणादिशाखासु षट्प्रविभागेषु प्रविभक्तः। एतेषु विंशशतकस्य जैनसंस्कृतसाहित्यसम्बद्धमौलिककृतीनां, संस्कृतव्याकरणसम्बद्ध– मौलिककृतीनां, संस्कृतन्यायसम्बद्धमौलिककृतीनां, धर्मशास्त्राचार्यसंहिताविषयकमौलिकग्रन्थानां, ज्योतिषसम्बद्धमौलिकग्रन्थानां, दर्शनसम्बद्धमौलिककृतीनां च परिचयः सयोगदानं निरूपितः। पञ्चमाऽध्याये विंशशतकीयव्याखानवाङ्मयस्य कोशवाङ्मयस्य च परिचयात्मकं योगदानात्मकं च विवेचनं कृतम्। षष्ठाध्याये संस्कृतभाषायामनूदितानां सम्पादितमौलिकसंस्कृतकृतीनां च स्वरूपं योगदानं च विस्तारेण प्रतिपादितम्। अन्तिमे सप्तमाऽध्याये प्रकल्पप्रबन्धस्य फलितांशः उपसंहृतिश्च उपदर्शिता। इति प्रकल्पप्रबन्धेऽस्मिन् विषयवस्तुनो विन्यासनं विहितम्। इत्येवंविधं प्रकल्पप्रबन्धस्य विषयस्वरूपं ध्यातव्यम्।

## शोधप्रकल्पविषयसम्बद्धप्राग्विहितशोधकार्यानामवलोकनम्–

'विंशशतकस्थजैनाचार्याणां कविमनीषिणां च संस्कृतविषयकयोगदान'मिति शोधप्रकल्पविषयमधिकृत्य संस्कृतभाषोपनिबद्धं शोधकार्यमद्यावधिकालपर्यन्तं न कुत्रापि जगति सम्पन्नमिति मया प्रकल्पविषयसम्बद्धसंस्कृतेतरभाषानिबद्धानां कतिचनशोधकार्याणामवलोकनेन ज्ञातम्। जयपुरनगरनिवासिना डॉ. कस्तुरचन्द्रकासलीवालविद्वत्वर्येण हिन्दीभाषायां योगदानविषयकं शोधपत्रं, तथैव विंशशतकस्थजैनाचार्याणां कविमनीषिणाञ्च विषये कैश्चिद् हिन्दीभाषिकैः डॉ.नरेन्द्रराजपुतादिभिः विद्वद्भिः लिखितम् उपलभ्यते। परं तत्सकलजैनसम्प्रदायान् न स्पृशतीति कारणात्समग्रजैनसंस्कृतविषयकयोगदानस्य अध्ययनसदृशे विषये शोधकार्यस्य महती आवश्यकता मयाऽवेक्षिता। मदीयसंस्कृतविश्वविद्यालयेन च साऽद्याभिमतेति साहित्यगौरवस्य विषयः सञ्जातः।

## शोधप्रकल्पप्रबन्धस्य पद्धतिः –

शोधप्रकल्पप्रबन्धेऽस्मिन्नुपलब्धानां विविधप्राथमिकग्रन्थस्त्रोतसां परिशीलनेन, प्राथमिकेतरसहायकग्रन्थानामध्ययनेन च प्रकल्पस्य विषयवस्तु तत्तद्विभागे सन्निवेश्य तत्तद्विभक्तविषयाणां विवेचनं सप्रमाणं निरूप्यते। प्रबन्धलेखनाय प्राधान्येन विवेचनात्मकशोधविधेः सहाय्यं मयाऽऽचरितम्। तथाहि, यथास्थलं विषयाणां तौलनिकं समीक्षणं चापि विधाय शोधविधीनां बाहुल्यं समानीतं वर्तते।

## शोधप्रकल्पप्रबन्धस्य उपादेयता –

विंशशतकस्थजैनाचार्याणां कविमनीषिणां च संस्कृतविषयकयोगदानविषये निबद्धेऽस्मिन् शोधप्रबन्धे दिगम्बरपरम्परायाः श्वेताम्बरपरम्परायाश्च प्रमुखजैनाचार्याणां कविमनीषिणां च संस्कृतविषयकं योगदानविषयम् उपदर्शयितुं यत्नो मयाऽत्र विहितः। प्रबन्धोऽयं संस्कृतविदां महते

उपकाराय सन्तिष्ठते। किञ्चाऽस्य प्रबन्धस्य माध्यमेन विंशशतके द्विविधजैनपरम्परासु विद्यमानायाः संस्कृतवाङ्मयविषयिन्याः स्थितेरवगमः जनसामान्यानां भवतीति प्रबन्धस्यास्य समेषां भारतीयसाहित्याध्येतॄणां कृते महती उपादेयता अस्तीत्यत्र नावशिष्यते लेशोऽपि सन्देहः।

## प्राचीनजैनसंस्कृतवाङ्मयम् अवधारणाश्च–

संस्कृतसाहित्यविरचने तदभिवर्धने च जैनाचार्याणां कविमनीषिणां च महत्त्वपूर्णं योगदानं वर्तते। पूर्वोक्तरीत्या पुराकालादेव जैनाचार्यैः जैनकविमनीषिभिश्च संस्कृतसाहित्यस्य सर्वविधविधासु काव्यरचनाः ग्रन्थरचनाश्च कृत्वा संस्कृतस्य प्रचार–प्रसारे मौलिकं कार्यं साधितम्। जैनाचार्यैः ग्रन्थनिर्माणावसरे लोकरुच्यनुगुणं प्राकृतभाषया साकमेव संस्कृतभाषायामपि काव्यानि, चरितकाव्यानि, कथाग्रन्थाः, नाटकानि, पुराणानि, छन्दः अलङ्कार इत्यादिविषयानधिकृत्य नैकाः ग्रन्थरचनाः कृताः सन्ति। परं परवर्तिकाले प्राग्विरचितसाहित्यस्य अद्यापि ग्रन्थभण्डागारेषु प्रकाशनाभावे यथास्थितिपतितस्य बहुधा ह्रासः सञ्जातः तथाच, तत्तत्काले यथोचितमूल्याङ्कनाभावेऽपि विरचितजैनसंस्कृतसाहित्यं तथा तावत् उत्कर्षस्थानं प्राप्तुं न शशाक इति कश्चित्खेदस्य सञ्जायते विषयः। प्राचीनकालाद्विरचितस्य प्रकाशितस्यैव चात्र जैनसंस्कृतवाङ्मयस्य दृष्टिक्षेपः सम्बद्धत्वाद् तदत्र प्रस्तूयते। प्रबन्धोऽयं प्रारम्भिकस्तरे दिगम्बरमतसाहित्यप्राधान्यमावहति। श्वेताम्बरमतीयस्य साहित्यस्य समग्राध्ययनविषयेऽनवरत–रीत्याऽहं लग्नः। सद्यस्थितौ श्वेताम्बराच्यार्यद्वयस्य साहित्योल्लेखनं विधाय आगामिनि कालेऽचिरादेव जैनपरम्पराद्वयोपेतः समग्रसाहित्याध्यनपरोऽयं प्रबन्धः प्रकाश्यतामानेष्यते इति प्रतिजानामि। तथाच, विश्वविद्यालयप्रेरणया अद्ययावत्सम्पादितः यथास्थिति आसाद्य इ–प्रकाशनार्थं समर्प्यते।

**१.जैनपुराणसाहित्यरचनाः–**

वैदिकपरम्परायामुपवर्णितानि पुराणानि समग्रसाहित्यं च सर्वत्र विख्यातं वर्तते। भारतीयवैदिकपरम्परायां सर्वस्यापि वाङ्मयस्य मूलं ब्रह्मणो मुखाद्विनिर्गताः सर्वसत्यभूताः वेदाः भवन्ति। तस्यैव प्रपञ्चभूताः उत्तरवर्तिनः ब्राह्मण–आरण्यक–उपनिषद्ग्रन्थाः पुराणानि च भवन्तीत्यपि सर्वसम्मतं मतं विदुषाम्। एतन्मौलिकप्राचीनसाहित्याधारेण एव उत्तरवर्तिनः प्रायशः सर्वस्यापि अद्ययावतो वाङ्मयस्य रचना सञ्जाता इति वैदिकपरम्परायामपि पुराणसाहित्यस्य मौलिकत्वं आकरग्रन्थत्वं प्राप्तं वर्तते।

जैनपरम्परायां पुराकालादारभ्यैव संस्कृतभाषायां पुराणरचनाः सञ्जाताः दृश्यन्ते। वैदिकपरम्परा इव जैनपरम्परा अपि प्राप्तकैवल्यस्य अर्हतो मुखाद्विनिर्गतां द्वादशाङ्गपरिमितां जिनवाचं सर्वसत्यभूताम् अङ्गीचकार। अतः कैवल्यप्राप्तस्य अर्हतो जिनस्य शिष्यवर्गैः श्रुता वीतरागवचनततिः एव श्रुत इति नाम्ना विख्याता। अतः जैनपरम्परायां श्रुत एव सर्वासां उत्तरवर्तिनां चतुर्णामनुयोगानां, शास्त्राणां, पुराणानां च मूलमिति जैनपरम्परावादिनः।

जैनाचार्यैः कविमनीषिभिश्च तत्तत्समये पुराणग्रन्थानां संस्कृतभाषायां रचनाः विधाय जैनसाहित्यिकजगति महद्योगदानं विहितम्। संस्कृतपुराणग्रन्थानां रचनयैव जैनसाहित्यिकेषु अध्येतृषु च संस्कृतविषयकं लोकप्रियत्वं समुत्पन्नम्। पुराणानि एव उत्तरवर्तिनः कथासाहित्यस्य काव्यमहाकाव्यादिसाहित्यरचनायाः आकरग्रन्थरूपेण उपजीव्यत्वेन च संस्थितानि। चरितकाव्यानां मूलस्रोतांसि पुराणानि भवन्ति।

जैनपुराणस्वरूपं वैदिकपुराणस्वरूपाद् बहुधा साम्यं बिभर्ति। जैनपुराणेषु तीर्थकराणां जीवनचरित्रपरिचयः मुख्यत्वेन भवत्येव। तदतिरिक्ततया नारायणप्रतिनारायणबलभद्रचक्रवर्तीनां

चतुष्षष्टिशलाकापुरुषाणां (महापुरुषाणां) जीवनचरित्रविषयकं कथानकं, सृष्टिचक्रं कालचक्रविषयकं च विवेचनं पुराणस्य विवेच्यविषयः भवति।

**२.जैनकाव्यसाहित्यरचनाः-**

काव्यसाहित्यं विश्वस्य लोकप्रियतां वहते। काव्यमाध्यमेन संसारिजीवात्मा तथाविधं ब्रह्मकल्पं सौख्यं अल्पावधावपि प्राप्तुमर्हतीति काव्यसाहित्यस्य जनसामान्यान् प्रति अस्ति महान्नुपकारः। साधारणतया काव्यसाहित्ये महाकाव्य-खण्डकाव्य-लघुकाव्य-कथाकाव्य-स्तोत्रकाव्य-शतककाव्य-चम्पूकाव्य-मुक्तककाव्यादयः प्रकाराः काव्यभूतस्य परमानन्दस्कन्धस्यैव भवन्ति। लौकिकसाहित्यशास्त्रे यथा काव्यस्य स्वरूपं वर्तते किञ्चित्तथैव जैनसाहित्यशास्त्राचार्यवाग्भटहेमचन्द्रादिभिरपि निरूपितं वर्तते इति कृत्वा स्वरूपविषये पार्थक्याभावेऽपि जैनसाहित्ये काव्यविधाः लौकिककाव्यविधेतराः अपि परिलक्ष्यन्ते।

जैनसाहित्ये उपलब्धानि संस्कृतमहाकाव्यानि स्थूलरूपेण द्विधा विभज्यन्ते १.विकसनशीलमहाकाव्यानि, २.अलङ्कृतमहाकाव्यानि च। विकसनशीलमहाकाव्येषु संस्कृतजैनपुराणानां, संस्कृतचरितकाव्यानां च प्राधान्येन अन्तर्भावो भवति। जैनसंस्कृत-अलङ्कृतकाव्यप्रकारे लौकिकमहाकाव्यानां कुमारसम्भवसदृशानां अन्तर्भावो भवति। जैनसाहित्ये अष्टमशतकारम्भे जटासिंहनन्दिकृतं वराङ्गचरितम् इति अलङ्कृतमहाकाव्यप्रकारकं काव्यं जैनकविना विरचितम्। रविषेणाचार्यस्य पद्मपुराणस्य रामकथाधारेण द्विसन्धानकाव्यस्य सप्तसन्धानकाव्यस्य रचना अलङ्कृतकाव्यविधिना जाता। एवमेव हरिवंशपुराणाधारेण जैनानुमतपाण्डवकथाविषयवस्तुना प्रद्युम्नचरितमित्यादि अलङ्कृतकाव्यानां रचनाः जाता इति जैनसंस्कृतमहाकाव्यानां विकासः द्विविधदशोपगतकाव्यानां विकासेन जातः।

जैनसंस्कृतमहाकाव्यानां परिचयः चरितनामान्तमहाकाव्यरूपेण, चरितेतरनामान्त-महाकाव्यरूपेण, सन्धाननामान्तमहाकाव्यरूपेण, आनन्दमहाकाव्यनामान्तरूपेण, ऐतिहासिक-महाकाव्यरूपेण च भवति।[२]

खण्डकाव्येषु लघुकाव्येषु च शतककाव्यानां, नीतिकाव्यानां, उपदेशकाव्यानां, स्तोत्रकाव्यानां, तथा अष्टककाव्यानाम् अन्तर्भावो भवति।

शतककाव्यपरम्परायां कविभर्तृहरेः(ई.स.५७०-६५१) संस्कृतभाषायां रचितं नीतिशृङ्गारवैराग्यं चेति शतकत्रयं संस्कृतसाहित्ये सर्वविदितं सुविख्यातं च वर्तते। मानवजीवनोपयोगिनीतिशृंगारादिभावानां विचाराणां च यथोचितसहभागोऽस्मिन् शतकत्रये कविभर्तृहरिणा कृत्वा जनसामान्यस्य महान् उपकारो विहितः। शतकत्रयम् उपलक्ष्यीकृत्य नैकाः टीकाः अद्ययावल्लिखिताः तासु जैनविदुषा घनसारकविना(ई.स.१४७८) विरचिता टीकाऽपि प्राचीनत्वं भजते इति विशेषतया उल्लेखनीयो विषयः।

मयूरकवेः(सप्तमशताब्दिस्थितस्य) सूर्यशतकम् स्तुतिपरं शतककाव्यं भवति। सूर्यदेवतायाः साहित्यिकविधिना स्तुतिरत्र कविना शतपद्येषु कृता। अमरुशतकं अमरुकविना विरचितम् अष्टमशतकीयं काव्यम् यत्र शृङ्गारभावानां पल्लवनं काव्यरूपेण स्वतन्त्रतया प्रतिपद्यं कृतं विद्यते। कालिदासस्य गीतिकाव्यलेखनकालानन्तरं अमरुकवेः शतककाव्यस्य स्थानं रसिकजनेषु वर्तते। आचार्यानन्दवर्धनः स्वयं 'मुक्तकेषु प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते यथा अमरुकस्य कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव' इत्येवंरूपेण ध्वन्यालोके उल्लिलेख। मयूरकवेः जामातुः बाणस्य चण्डीशतकमिति शतपद्यात्मकं काव्यं चण्डीदेव्याः स्तुतिपरं काव्यमिति विख्यातम्। चारूचर्याशतकमिति काश्मिरपण्डितकवेः एकादशशतकीयस्य

[२] .जैनसंस्कृतमहाकाव्यों मे भारतीयसमाज,पृ.४६

क्षेमेन्द्रस्य रचना जीवनोपयोगिसद्व्यवहारस्य लोकज्ञानस्य च काव्यरूपेण निरूपणं करोति। कविसोमेश्वरविरचितं त्रयोदशशतकीयं रामशतकम् इति रामायणाश्रितं शतककाव्यं रामकथानकं काव्यरूपेण निरूपयति। अस्यामेव परम्परायां नागपुरस्थितस्य प्रज्ञाभारती डॉ.श्रीधरभास्करवर्णेकर- वर्यस्य ई.स.१९५८ तमे वर्षे प्रकाशितस्य भारतरत्नशतकस्य (जवाहरतरङ्गिणी काव्यस्य) वैशिष्ट्यं किञ्चिद्भिन्नं वर्तते। एतत्प्रबन्धात्मकं काव्यं शतककाव्यपरम्पराविधया प्रथमप्रधानमन्त्रिणः पण्डितजवाहरलालनेहरुमहोदयस्य यशोगानं गौरवनिरूपणं च शतकपरम्परया करोति।

दृश्यकाव्यलेखनेऽपि जैनाचार्याणां स्थानम् अग्रगण्यं वर्तते। आचार्यहस्तिमलः (१३शतकं) सर्वेभ्यः प्रमुखनाट्यकारेषु अनन्यतमो आचार्यः आसीत्। अनेन विक्रान्तगौरवं, सुलोचनानाटकं, सुभद्राहरणं, अञ्जनापवनञ्जयनाटकं, मैथिलीकल्याणम् इत्यादीनि नाटकानि लिखितानि। रामचन्द्रसूरि नलविलासनाटकं, कौमुदीमित्रानन्दप्रकरणं, पाटवाभ्युदयनाटकं, रघुविलासनाटकं, रोहिणीमृगाङ्कप्रकरणं, सत्यहरिश्चन्द्रनाटकं, निर्भयभीम-व्यायोग इत्येवं दृश्यकाव्यरचना अपि विरचिताः। षोडशशतकस्य अन्तिमदशके वादिराजसूरिकृतं ज्ञानसूर्योदयनाटकमपि कस्य नो कर्णयोः विषयो जातः स्यादिति विविधदृश्यकाव्यरचनाः जैनकविभिः काले काले विहिताः।

### ३.जैनसंस्कृतव्याकरणरचनाः-

संस्कृतव्याकरणं प्रति जैनाचार्याणां मनीषिणां च योगदानं द्विविधप्रकारेण वक्तुं शक्यते। तत्र प्रथमप्रकारो नाम यत्र जैनाचार्यैः स्वयं व्याकरणसम्प्रदायानां प्रतिष्ठापना विहिता। एतान् प्रतिष्ठापितव्याकरणग्रन्थान् वयं स्पष्टरूपेण जैनव्याकरणम् इति नाम्ना सम्बोधयामः। जैनेन्द्रव्याकरणं, शाकटायनव्याकरणं, हैमव्याकरणं च जैनव्याकरणप्रक्रियामनुवर्तन्ते इति कृत्वा जैनव्याकरणसम्प्रदायेषु तेषां पुराकालाद् अन्तर्भावनं विहितम्। विनयविजय

उपाध्यायः(सप्तदशशताब्धिः), लक्ष्मीवल्लभमुनिश्च जैनेन्द्रव्याकरणमेव ऐन्द्रव्याकरणमस्तीति स्पष्टतया प्रतिपादयति।

जैनेद्रव्याकरणपरिवर्तिव्याकरणग्रन्थेषु शब्दप्राभृतम् इति व्याकरणग्रन्थः प्रधानभूतः। परवर्तिषु वामनवैय्याकरणः, पाल्यकीर्तिः, शाकटायनः, बुद्धिसागरसूरिवैयाकरणः, भद्रेश्वरसूरिः, आचार्यहेमचन्द्रसूरिः, वर्धमानवैय्याकरणः(१२शतकं) इत्येतैः वैय्याकरणैः जैनसंस्कृतव्याकरणस्य ग्रन्थरचनाः, विकासश्च तत्तत्काले सञ्जातः।

**४.जैनदर्शनसम्बद्धाःन्यायसम्बद्धाश्च रचनाः-**

जैनदर्शने आचार्यसमन्तभद्रस्य(द्वितीयशतकस्थस्य) न्यायविषयाणां, दर्शनविषयाणां च ग्रन्थप्रणेतृषु विशिष्टं स्थानं वर्तते। जैनाधारभूतस्य अनेकान्तवादसिद्धान्तस्य अन्यवादिनां पुरस्तात् यथोचितं प्रस्तोतारूपेण अस्य नामलौकिकं विद्यते। आप्तमीमांसा, युक्त्यनुशासनम् चेति द्वाभ्यां कृतीभ्यां भवता अन्यदर्शनमतानां खण्डनपूर्वकं स्वीयमतस्य यथौचित्यं शास्त्रसभासु साधितम्। उत्तरवर्तिनि काले आप्तमीमांसा ग्रन्थमुपलक्ष्यीकृत्य भट्टाकलङ्काचार्येण(७शतकं) अष्टशती, विद्यानन्दि- आचार्येण च अष्टसाहस्री भाष्यग्रन्थानां रचनाः विहिताः।

सप्तमशतकस्थः आचार्यभट्टाकलङ्कः जैनन्यायस्य आद्यसंस्थापकरूपेण ज्ञातो भवति। उत्तरवर्तिभिः सकलैः जैनन्यायग्रन्थकर्तृभिः आचार्यैः एतस्य मार्गानुसृतः। अष्टशती भाष्यातिरिक्ततया लघीयस्त्रयं, प्रमाणसंग्रहः, न्यायविनिश्चयः, सिद्धिविनिश्चयश्चेते भट्टाकलङ्कस्य प्रमुखाः जैनन्यायरचनाः। अष्टमशतके आचार्यहरिभद्रसूरिणा पुनः अनेकान्तसिद्धान्तः उज्जीवितः। अनेकान्तजयपताका, षट्दर्शनसमुच्चयः, अनेकान्तवादः इत्येताः अस्य प्रमुखाः रचनाः जैनन्यायसंस्कृतग्रन्थपरम्परां विवर्धितवत्यः। पश्चाद्वर्तिना आचार्यमाणिक्यनन्दिना परीक्षामुखं, आचार्यप्रभाचन्द्रेण प्रमेयकमलमार्तण्डस्य विशालतमस्य

टीकाग्रन्थस्य, लघीयस्त्रयग्रन्थाधारेण रचिता न्यायकुमुदचन्द्रोदय संस्कृतटीकाग्रन्थश्चेते ग्रन्थाः जैनन्यायपरम्परां परिपोषितवन्तः। दशमशतके जातेन आचार्यदेवसेनेन लघुनयचक्रं, बृहन्नयचक्रं, आलापपद्धतिः इत्यादिन्यायग्रन्थानां रचनापूर्वकं जैनन्यायपरम्परायाः अभिवर्धने योगदानमाचरितम्। आचार्यहेमचन्द्रः (११-१२शतकं) प्रमाणमीमांसा इति न्यायग्रन्थं विरचय्य न्यायपरम्परां अभिवर्धयामास। एवंक्रमेण अष्टादशशतकीयेण अभिनवधर्मभूषणेन न्यायदीपिका इति ग्रन्थरत्नं विरचय्य जैनन्यायपरम्परायां महद्योगदानं प्रदाय उपकृतम्।

एनामेव शृङ्खलामनुसृन्वन् जैनन्यायपरम्परायाः पं.चैनसुखदासन्यायतीर्थकविमनीषि-विरचितः दर्शनसार इत्याख्यो ग्रन्थः, स्थानकवासिश्वेताम्बरजैनाचार्यश्रीघासीलालविरचितं न्यायरत्नावलिः, न्यायरत्नावलिस्वोपज्ञटीका चेति ग्रन्थद्वयम् इत्येवंविधिना तथाविधनैके ग्रन्थाः जैनन्यायक्षेत्रे साहित्यिकं योगदानं वहन्तीति प्रस्तुतप्रकल्पेऽवलोकनीयम्।

**५.उपसंहारः-**

एवंविधिना अध्यायेऽस्मिन् प्रकल्पप्रबन्धस्य स्वरूप-व्याप्ति-पद्धति-पूर्वशोधावलोकन-उपादेयतादिविषये विस्तरेण विज्ञाय पुराकालादागतानां विविधशाखासु जैनसम्बद्धपरम्पराणां आरम्भ-विकास-योगदानादिविषयः अत्र स्वल्पमात्रेण निर्दिष्टः येन आर्वाचीनविंशशतकस्य साहित्यस्य आरम्भ-विकास-योगदानादिविषये सामान्यजनस्य प्रवेशसौकर्यं सहजतया सम्पादने सहाय्यमाचरितं भवति।

□□□

# द्वितीयोऽध्यायः– विंशशतकस्थजैनाचार्याणां परिचयः।

## १. महाकविआचार्यश्री ज्ञानसागरः

**(पं.भूरामल शास्त्री)**

(१८९१–१९७३)

विंशशतकस्य आद्यप्रवर्तकाचार्यत्वेन चारित्रचक्रवर्तिआचार्यशान्तिसागरस्य स्थानं महत्त्वपूर्णम्। एतेषां संघपरम्परायाम् आचार्यश्रीवीरसागरः आचार्यशिवसागरश्च प्रकाण्डाचार्यावभवताम्। तयोः आचार्यशिवसागरस्य भवान् प्रथमः शिष्यः आचार्यज्ञानसागररूपेण साहित्यिकेषु अग्रगण्यः दिगम्बरजैनाचार्यः परिगण्यते। राजस्थानप्रान्तस्य सीकर मण्डले राणोली नाम्नि ग्रामे १८९२तमे वर्षे प्राप्तजन्मानः इमे जैनसमाजे प्रायशः चतुर्दशशतकाद् विरामप्राप्तकाव्य–महाकाव्यलेखनपरम्परां स्वीयलेखन्या विंशतिशतके पुनरुज्जजागरुः। एतेषां मातुः नाम घृतवरी पितुश्च नाम चतुर्भुज इत्यासीत्।[१] बाल्यकाले गृहस्थदशां यावत्तत्रभवतां नाम भूरामल इत्येवं आसीत्। दशवर्षीये अल्पायुषि काले एव पितुः दिवङ्गतेन आर्थिकसमस्यया च क्लिश्यताऽपि[२] तत्रभवता ऐहिकीं दुःखपरम्पराम् अविगणय्य आध्यात्मिकी साहित्यिकी च लोकयात्रा समारब्धा। समस्यानां परिहाराय साहित्यविद्यायाः अध्ययनार्थञ्च वाराणसीनगरीं प्रति प्रस्थितः। वाराणसेयसंस्कृतविश्वविद्यालयस्य स्याद्वादमहाविद्यालये तत्रभवता साहित्यविद्यायाः जैनदर्शनस्याध्ययनं पूर्णतां समानीतम्। आर्थिकसमस्यापरिहारार्थं तत्रभवता गङ्गाघाटस्थलेषु तत्र–तत्र (कर)वस्त्रविक्रयणं विहितं तथा प्राप्तधनेन साहित्यविद्यायाः दर्शनविद्यायाश्च अध्ययनं ग्रन्थप्रणयनकार्यं च सुचारुरूपेण साधितम्। गच्छति काले 'सा विद्या या विमुक्तये' इति या श्रुतिः वर्तते तस्याः यथार्थता भवज्जीवने सहजरूपेण समागता। सम्यक्चारित्रं संधार्य

१. द्रष्टव्यं सुद. सर्गान्तपद्यम्।

2. जैनमित्र (साप्ताहिकम्)वीरसंवत् २४९२, वैशाखसुदी ८, २४.४.१९६६, पृ.२५३

आत्मकल्याणस्य बलवतीच्छा मनसि प्रवृद्धिं गता। किंबहुना, १९४७तमे वर्षे तत्रभवता विद्यासेवायै आजीवनं ब्रह्मचर्यव्रतं (प्रतिमाव्रतं) संधारितम्। ब्रह्मचर्यव्रतं संधार्य श्रुतसेवायां तावान् निमग्नः समजायत परिणामतः बृहत्कायरूपाणि चत्त्वारि महाकाव्यानि विरचय्य खण्डचम्पूकाव्यादीनि, शतककाव्यानि च विरचितानि। १९५५ तमे वर्षे मनसुरपुर (रेनवाल) ग्रामे क्षुल्लकव्रतदीक्षां, १९५७ तमेवर्षे ऐलकव्रतदीक्षां तथा १९५९तमे वर्षे आचार्यश्री शिवसागरगुरुकरकमलाभ्यां मुनिव्रतदीक्षां स्वीचकार। व्रतीदशायां ज्ञानसागर इति नामधारिणानेन स्थाने स्थाने रचितग्रन्थानां वाचनादिभिः संशोधनानि विहितानि। १९६९ तमीयवर्षस्य फेब्रुवारी सप्तमदिनाङ्के नसिराबाद(राज.) ग्रामस्थश्रावकजनैः भवन्तः आचार्यपदभागिनः घोषिताः। सुदीर्घसाहित्योपासनायाः अनन्तरं शरीरक्षीणदशायां च भवद्भिः स्वयं स्वीयं आचार्यपदं सुयोग्यशिष्याय अद्यतनीयाय सन्तशिरोमणिआचार्यश्री विद्यासागराय समर्पितम्। तथाच, १९७३ तमवर्षस्य जूनमासस्य प्रथमदिनाङ्के[३] समाधिमरणं सल्लेखनं वेति साधितम्।

आचार्यश्रीज्ञानसागरगुरुणा (गृहस्थदशायां वाणीभूषणपं.भूरामलशास्त्रीति नामधारिणा महाकविना) **चत्वारि महाकाव्यानि,** (दयोदयमहाकाव्यम्, वीरोदयमहाकाव्यम्, सुदर्शनोदयमहाकाव्यम्, भद्रोदयमहाकाव्यं चेति)। वीरेन्द्रशर्माभ्युदयकाव्यम्, मुनिमनोरञ्जनाशीतिः भक्तिसंग्रहश्चेति लघुकाव्यानि, सम्यक्त्वसारशतकम्, प्रवचनसारः हितसम्पादकं चेत्येते आचारशास्त्रसम्बन्धिदर्शनग्रन्थाः[४] भवन्ति।

---

३ समु.द.प्रस्तावना

४.विशेपविवेचनं चतुर्थाध्याये आचारधर्मशास्त्रसम्वद्धविभागे द्रष्टव्यम्।



आचार्यज्ञानसागरस्य संस्कृतरचनाः
साहित्यिकग्रन्थरचनाः
दार्शनिकग्रन्थरचनाः
महाकाव्यानि
चम्पूकाव्यम्
लघुकाव्यम्
दयोदयचम्पूकाव्यम्
मुनिमनोरञ्जनाशीतिः
वीरेन्द्रशर्माभ्युदयं
भक्तिसंग्रहः
जयोदयमहाकाव्यम्
वीरोदयमहाकाव्यम्
सुदर्शनोदयमहाकाव्यम्
भद्रोदयमहाकाव्यम्
प्रवचनसारः
हितसम्पादकं
सम्यक्त्वसारशतकम्


□□□

## २.आचार्यश्रीकुन्थुसागरः

(१८९७–१९४५)

आचार्यश्रीकुन्थुसागरमुनिराजः विंशशतकस्य साहित्यकारेषु अलौकिकधर्मप्रभावकेषु अन्यतम आचार्यः परिगण्यते। नैकवर्षेषु आचार्यप्रवरैः गुजरातप्रान्ते असंयमदशापन्नानां धर्मविमुखीनां प्रजानां धर्मोपदेशपुरस्सरं साहित्यसर्जनं विधाय महती धर्मप्रस्थापना विहिता। भवतां विद्वत्ता, गम्भीरता, निःस्पृहत्वं, सर्वजीवसमभावत्वं, लोकहितैषिता, विश्वबन्धुता इत्यादयो गुणाः सर्वजनपूजनीयाः भवन्ति।

कर्नाटकप्रान्तस्य बेलगॉवमण्डले ऐनापुर'मिति नाम्नि नगरे प्राप्तजन्मानः बाल्यकाले रामचन्द्र इति नामाभिधेयो पुण्यवतोः सातप्पासरस्वत्योः सुपुत्रः विनयशीलसदाचारादिभिः सुसम्पन्न आसीत्। षोडशे वर्षे अनिच्छितोऽप्यस्य धर्मचिन्तनमग्नस्य रामचन्द्रस्य पित्रोः केवलं इच्छावशाद् विवाहः सम्पन्नः। अन्तरङ्गतः एव विरक्तः रामचन्द्रः युवदशायामपि धर्मसंवादे, सत्संगतौ, शास्त्रस्वाध्याये च निरतः भवति स्म। स्वपित्रोः तथाच भ्रातृभगिन्योः देहावसानाऽनन्तरं युवा रामचन्द्रो सर्वथा विरक्तः सन् साधुवर्त्मनि समारूढः। अष्टाविंशतिदेशीयः रामचन्द्रोऽयं युवा श्रवणबेलगोलाधर्मक्षेत्रे विश्वविख्यातस्य भगवतः श्रीगोमटेशबाहुबलिनः मङ्गलसन्निधौ आचार्यश्रीशान्तिसागरगुरोः करकमलाभ्यां प्राथमिक–क्षुल्लकदीक्षया दीक्षितो भवति। आचार्यश्री सुधर्मसागरगुरोश्च संस्कृतभाषायाः, जैनसिद्धान्तानां, जैनन्यायपरम्परायाःच अध्ययनम् अकरोत्। १९८६ तमे पञ्चत्रिंशद्वर्षदेशीयः एषः ऐलकश्रीपार्श्वकीर्तिः सोनागिरितीर्थक्षेत्रे गुरोः आचार्यश्रीसुधर्मसागरगुरोःकरकमलाभ्यां मुनिदीक्षां अङ्गीचकार। मुनिश्रीकुन्थसागर इति नाम्ना च सम्बोधितः। सर्वविधगुणसम्पन्नं मुनिकुन्थुसागरमवलोक्य गुरुणा सुधर्मसागरेण स्वीयाचार्यपदं तं प्रदातुमिष्टं परं, गुरोःआचार्यपदं अनिच्छन्तं तमन्ततोगत्वा भक्तजनसमुदायः आद्याचार्यस्य श्रीशान्तिसागरस्य अनुमत्यनुगुणं तारंगा(गुजरातप्रान्ते)आचार्यपदेन विभूषयति। विद्वद्वर्गे

जनसामान्ये च आमूलाग्रतया परिवर्तनमापादयिता, गभीरः, निःस्पृहमना, सङ्कल्पवान्, समर्पकवृत्तिः आचार्यश्रीकुन्थुसागरवर्यः अद्य अस्मासु न वर्तते परं तल्लिखितसाहित्यं अस्मान् तस्य स्मारणमवश्यं कारयिष्यतीति निःसन्देहम्।

आचार्यश्रीकुन्थुसागरः आत्मसाधनायां, जनकल्याणे च सदैव निरतः भवति स्म। स्वीयजीवनकाले शान्तिसुधासिन्धुः[५], श्रावकधर्मप्रदीपः[६], मुनिधर्मप्रदीपः, मोक्षमार्गप्रदीपः, बोधामृतसारः, निजात्मशुद्धिभावना, ज्ञानामृतसारः, लघुबोधामृतसारः, स्वरूपदर्शनसूर्यः, स्वप्नदर्शनसूर्यः, नरेशधर्मदर्पणः, लघुप्रतिक्रमणम्, लघुसुधर्मोपदेशसारः, भावत्रयफलदर्शी, सुवर्णसूत्रम्[७], शान्तिसागरचरित[८]श्चेताः मौलिकरचनाः आचार्यप्रवरस्य अपरम्पारज्ञाननिधिं प्रति अस्माकं चेतांसि स्थिरीकरोति।

□□□

---

[५].विशेपनिरूपणं चतुर्थाध्याये जैनधर्मशास्त्रीयप्रविभागे द्रष्टव्यम्।
[६].यथा उपरितनम्।
[7].विशेपनिरूपणं चतुर्थाध्याये साहित्यप्रविभागे द्रष्टव्यम्।
[८].विशेपनिरूपणं चतुर्थाध्याये साहित्यप्रविभागे द्रष्टव्यम्।

## ३.सन्तशिरोमणिःआचार्यश्रीविद्यासागरः

(जन्मवर्ष–अक्टोबर,१९४६)

कर्नाटकप्रान्तस्य बेळगॉवमण्डले सदलगा ग्रामे १० अक्टोबर १९४६ तमे वर्षे प्राप्तजन्मा अयं आचार्यः दिगम्बरपरम्परायां तपस्विनां शिरोमणिरूपेण सर्वैः ऐकमत्येन सम्मतः। अस्य २०१७ वर्षस्य २८जूनदिनाङ्के एतेषां पञ्चाशत्तमः मुनिदीक्षादिवसः (स्वर्णिमदीक्षासमारोहः) अखिले विश्वे महता हर्षेण आयोज्यमानो वर्तते।

शिशुदशायां विद्याधर इति नाम्ना सम्बोध्यमानोऽयं बाल्यकाले पित्रा मल्लपा अष्टगे वर्येण तथा मात्रा श्रीमत्या सुसंस्कारितः सुलालितश्च। बाल्यकाले याभ्यां पालितः तौ पितरौ अद्य आचार्यवर्यस्य संघे पिता मल्लिसागरनाम्ना मुनिदीक्षितः माता च आर्यिकासमयमति इति नाम्ना सुदीक्षिता। एकं विहाय सर्वेऽपि भ्रातरोऽपि संघे मुनिदीक्षिताः वर्तन्त इति सर्वोऽपि परिवारः संयमी, तपस्वी जात इति भवतां विलक्षणरूपिणी ख्यातिः।

बाल्यकाले नवमीकक्षापर्यन्तं लौकिकीं शिक्षामवाप्य १९६७ तमे एकविंशतमे वर्षे आचार्यदेशभूषणमुनितः आजीवनं ब्रह्मचर्यव्रतस्याङ्गीकारः कृतः। १९६८ तमे वर्षे दिगम्बरमुनिरूपेण महाकविआचार्यज्ञानसागरेण सुदीक्षितः सुपाठितश्चेति कारणात् भवान्नपि महाकविवर्त्मनि स्वयमेव प्रस्थितः। भवतां साधुसंघे इदानीं द्विशताधिकाः साधवः भवतां निर्देशने तपोमार्गे प्रस्थितः रत्नत्रयाराधने तत्पराः च सन्तीति भारतीयसाधुपरम्परायाः महद्गौरवाय एव कल्पते।

भवतां हिन्दीभाषायां मूकमाटी इति महाकाव्यं विश्रुतमिति कृत्वाऽपि भवन्तः महाकवित्वभागिनः। परमत्र प्रकृतत्त्वात् आचार्यवर्याणां केवलं संस्कृतकृतीनां परिचयात्मकं प्रस्तूयते।

स्वीयदीक्षागुरोः आचार्यज्ञानसागरतः दीक्षां शिक्षां च प्राप्य आचार्य विद्यासागरेण मे गुरुणा संस्कृतभाषायां निम्नलिखितानि शतककाव्यानि विरचितानि। श्रमणशतकम्, भावनाशतकम्, निरञ्जनशतकम्, परीषहजयशतकम्, सुनीतिशतकम्, शारदास्तुतिः[१] इति संस्कृतकाव्यानि विख्यातानि प्रसिद्धिंगतानि च वर्तन्ते। एतेषां सर्वेषां परिचयः चतुर्थाध्याये शतककाव्यपरम्परा विभागे प्रदीयते।

❑❑❑

१. स्तोत्रकाव्यपरम्परायां चतुर्थाध्याये विशेषनिरूपणं द्रष्टव्यम्।

## ४.आचार्यश्रीमहावीरकीर्तिः

(१९१०-१९७२)

आचार्यश्रीआदिसागर(अंकलीकर)दिगंबरसंघपरम्परायां आचार्यगुरोः आदिसागरस्य शिष्यरूपेण आचार्यमहावीरकीर्तिः अष्टादशप्रादेशिकभाषाणां वेत्ता महान् तपस्वी च सञ्जातः। उत्तरप्रदेशस्य फिरोजाबादनगरे ०३ मे १९१० तमे वर्षे प्राप्तजन्माऽयं पोरवालगोत्रोत्पन्नः महेन्द्रसिंह इति नाम्ना पितृभ्यां श्रीरतनलालबुन्दादेवीभ्याम् अभिहितः। भवत्पिता श्रीरतनलालवर्यः नित्यसंस्कृतपाठी आसीत्। भवतो दशवर्षीयाल्पायुषि काले माता स्वर्गवासिनी जातेति कारणात्संसारतो बाल्यकालादेव भवान् विरक्तः सञ्जातः। फिरोजाबादनगरे प्रारम्भिकीं शिक्षामधिगत्य उच्चशिक्षार्थं इन्दौरनगरस्थिते हुकुमचन्द्र महाविद्यालये ब्यावरस्थिते महाविद्यालये च भवता विद्याध्ययनम् आरभ्य न्यायसिद्धान्तः, न्यायतीर्थः, व्याकरणतीर्थः इत्यादिपरीक्षा समुत्तीर्णा। ज्योतिःमन्त्र-आयुर्वेदादिशास्त्राणां गहनतया अध्ययनं तत्र भवता विहितम्। महाराष्ट्रप्रान्ते उदगांवग्रामे आचार्यगुरोः करकमलाभ्यां मुनिदीक्षां स्वीकृत्य भवान् तपोमार्गे विद्याध्ययनमार्गे च सकलप्रयत्नैः प्रस्थितः। आचार्यादिसागरगुरुणा स्वीयाचार्यपदं सुयोग्याय शिष्याय मुनिश्रीमहावीरकीर्तये प्रदाय आचार्यश्रीमहावीरकीर्तिरूपः महामेरुर्विनिर्मितः। आचार्यपदप्राप्तिपूर्वकं महावीरकीर्तिना प्राप्तान्तसमयस्य गुरोः श्रीआदिसागरस्य (अंकलीकरस्थस्य) सल्लेखनं विधिना साधितम्। गुरोः सल्लेखनाऽनन्तरं भवता महाराष्ट्रेन साकं दक्षिणभारते, बिहार-राजस्थान-मध्यप्रदेशादिस्थलेषु जिनधर्मस्य जिनवाङ्मयस्य च प्रभावना कृता। आचार्यविमलसागराय स्वीय-आचार्यपदं प्रदाय तद्धस्तकमलाभ्यामेव सल्लेखनाव्रतस्थः सञ्जातः। भवतां स्मृतिग्रन्थः क्षुल्लकमणिश्रीशीतलसागरेण सम्पाद्य प्रकाशितः। आचार्यमहावीरकीर्तिना प्रबोधाष्टकमिति[१०] मुक्तरचना विरचिता।

□□□

[१०].चतुर्थाध्याये मुक्तकरचनाविभागे विशेषविवेचनं द्रष्टव्यम्।

## ५.मुनिश्रीनियमसागरः

(जन्मवर्षं–दिसंबर१९७५)

कर्नाटकप्रान्तस्य सदलगा ग्रामे प्राप्तजन्मा नियमसागरमुनीन्द्रः बाल्यकालतः यदा विंशवर्षदेशीयः समजायत; तदानीं पूज्यसुबलसागरमुनीन्द्रस्य धर्मोपदेशेन उपरतः। विरक्तिदशायां च निमग्नः। पूज्यसुबलसागरमुनीन्द्रस्य पावनोपदेशेन तदानीं भवता अजमेरनगरे समासीनस्य आचार्यविद्यासागरसंघस्य सन्निधौ विद्याध्ययनार्थं गतम्। ततः ब्रह्मचर्यादिव्रतपूर्वकम् शास्त्राध्ययनं समारब्धम्। १८ दिसंबर,१९७५ तमे दिनाङ्के सोनागिरिसिद्धक्षेत्रे सर्वप्रथमक्षुल्लकदीक्षां अधिगत्य धन्यत्वं साधयामास। बुन्देलखण्डप्रान्तस्य सागर इति सांस्कृतिकनगरे वैशाखकृष्णामावस्यायां १५ एप्रिल, १९८० तमे दिनाङ्के तत्रभवन्तः गुरोः आचार्यविद्यासागरयतीन्द्रस्य करकमलाभ्यां दिगम्बरमुनिदीक्षां प्राप्य आत्मानं सफलीकृतवन्तः। बी.एससी(द्वितीयवर्षं)यावल्लौकिकीं शिक्षामधीत्य चित्रकलायां भवन्तः विशेषरूपेण रूचिमान्। चित्रकर्मणि नैपुण्येन साकमेव काव्यप्रकारेषु चित्रकाव्ये अपि भवताम् असाधारणगतिः वर्तते। किञ्च, संस्कृतभाषायामपि भवतां नितरां अधिकारः परिलक्ष्यते। एवं संस्कृतभाषामाध्यमेन चित्रकाव्यानां प्रणयने भवतां प्रतिभा सहजतयैव प्रवर्तते इत्यत्र नास्ति कश्चिदपि सन्देहः। स्वीयगुरुम् आचार्यविद्यासागरमुनीद्रं प्रति भवता अति सहजतया अष्टपद्यात्मकं 'विद्याष्टक'मिति[११] चित्रकाव्यं विरचय्य संस्कृतजगति चित्रकाव्यपरम्परां पुनरेकवारं सञ्जीवितं कारितम्। परमपूज्यनियमसागरमुनीद्रस्य रत्नत्रयस्तुतिशतकम्, कुन्दकुन्दाष्टकम् इत्यादयः अन्येऽपि दर्शनसम्बन्धिनः ग्रन्था वर्तन्ते।

□□□

[11] .चतुर्थाध्याये साहित्यानुभागे द्रष्टव्यम्।

## ६.मुनिश्रीप्रणम्यसागरः

(जन्मवर्ष–सप्टेंबर१९७५)

मुनिश्रीप्रणम्यसागरः अद्यतनीयः सर्वेभ्यः युवा दिगम्बरसाधुः साहित्यिकश्च। सन्तशिरोमणिआचार्यश्रीविद्यासागरजैनमुनिसंघपरम्परायामयं फेब्रुवारी, १९९८तमे वर्षे मुनिरूपेण गुरुणा आचार्यविद्यासागरवर्येण सुदीक्षितः अद्य स्वीयात्मतेजसा साहित्यलेखनेन चात्मानं चकास्ति साहित्यसुधासरोवरे।

भाद्रपदशुक्लाष्टमीतिथौ १३/०९/१९७५ तमे वर्षे उत्तरप्रदेशस्य मानपुरीमण्डले भोगावग्रामे प्राप्तजन्मा अयं बालः सर्वेश इति नाम्ना पुण्यवद्भ्यां वीरेन्द्रकुमारसरिताभ्यां पितृभ्यां सनाथीकृतः। बाल्यकालादेव विनम्रतासदाचारनीतिसम्पन्नतादिभिः सुसम्पन्नः अयम् अचिरादेव १९९४तमे वर्षे गृहत्यागं विधाय संघस्थो भवति। ब्रह्मचर्यव्रतपूर्वकम् अध्ययने निजकल्याणे च प्रवर्तमानो भवति। मध्यप्रदेशप्रान्तस्य देवासमण्डले नेमावरतीर्थस्थले क्रमशः ई.१९९७, ई.१९९८ तमे च वर्षे अध्ययनपरायणस्यास्य ब्र.सर्वेशस्य क्षुल्लक–ऐलकदीक्षे च गुरुणा सन्तशिरोमणिना आचार्यविद्यासागरेण विहिते। मुक्तागिरीक्षेत्रे च ११/०२/१९९८तमे दिनाङ्के दिगम्बरमुनिरूपेण दीक्षितो सम्भूय आत्ममुक्तिपथि प्रवर्तयन् शास्त्रानुगामी सञ्जातः, साहित्याराधनायां च नितरां प्रवृत्तः। अद्यदिनं यावद् अल्पीयसि आयुष्यपि पूज्यमुनिश्री प्रणम्यसागरेण नैकाः संस्कृतव्याख्याः सुतरां विरचिताः। १.लिंगशीलपाहुड–टीका, २. समाधितन्त्र–टीका, ३. चैतन्यचन्द्रोदय–टीका, ४. पुरुषार्थसिद्ध्युपाय–टीका, ५. आत्मानुशासन टीका, ६. बारसानुवेक्खा–टीका इत्येताः विभिन्नग्रन्थानां संस्कृतव्याख्याः मुनिश्रीप्रणम्यसागरेण विरचिताः टीकाग्रन्थेषु राजन्ते। ग्रन्थानां विशदविवरणं चतुर्थाध्याये तत्तदनुभागे प्रदत्तं वर्तते। तत्ततः द्रष्टव्यम्।

□□□

## ७.आचार्यविरागसागरः

(जन्म-०२ मे,१९६३)

मध्यप्रदेशप्रान्तस्य दमोहमण्डले पथरियानगरे प्राप्तजन्मनोऽस्य पूज्याचार्यवर्यस्य शिशुदशायां अरविन्द इति नामधेयं पितृभ्यां श्रीकपूरचंदश्यामादेवीभ्यां कृतमासीत्। मातापितृभ्यां सुलालितोऽयं बालो यद्यपि वयसा बालः परं अन्तर्ज्ञानेन विज्ञः सन्नेव प्रवर्तते स्मेति कारणात् १९८० तमे सप्तदशवर्षदेशीये अल्पायुषि काल एव प्रारम्भिकीं क्षुल्लकदीक्षां आचार्यश्रीविमलसागरगुरोः सन्निधौ स्वीचकार। वर्षत्रयानन्तरकाले निरन्तरतपोमार्गे प्रकर्षेण प्रस्थीयमानं युवानं गुरुणा आचार्यश्रीविमलसागरेण महाराष्ट्रप्रान्तस्य औरंगाबादनगरे मुनिदीक्षया अनुगृहीतम्। ततःपरं श्रीअरविन्दस्य नामकरणं मुनिश्रीविरागसागर इति सञ्जातम्। तथाच, एकमासेन कालेन एव द्रौणगिरितीर्थक्षेत्रे आचार्यपदेन श्रमणपरम्परां प्रवर्धितवन्तः।

तपोमार्गे प्रस्थितेन भवता महतो दिगंबरसाधुसंघस्य निर्माणं विधाय सुचारूरूपेण संघनिर्देशनं कृतम्। इदानींतन भवतां साधुसंघे ०८आचार्याः, ६८मुनयः, ०४ साध्वीसंघप्रमुखगणिन्यः, ६४ साध्व्यः क्षुल्लक-क्षुल्लिका-एलकादिभिः साकम् आहत्य २०३ तपस्विगणवर्याः सन्ति ये तपसि प्रवर्तन्तः साहित्यसरोवरे निमग्ना हंसा इव भारतभुवि विचरन्ति।

आचार्यविरागरसागरस्य संस्कृतसाहित्यविषयकं टीकाग्रन्थद्वयं- १.रयणसारसंस्कृतटीका, २.वारसानुपेक्खासंस्कृतटीका चेति उपलभ्येते।

□□□

## ८.आचार्यश्रीसुविधिसागरः

(जन्मवर्ष–मार्च,१९७९)

आचार्यश्रीआदिसागर(अंकलीकर)परम्परायाः भवान् पट्टाचार्यत्वेन राजते। स्वभावसरलता, जिज्ञासूवृत्तिः, निष्पक्षतादिभिः गुणैः भवान् साधुजनेषु नितरां विशिष्यते। भवल्लिखितं चतुर्विंशतिस्तवनम्, आदिसागरभक्तिः, सन्मतीसागराष्टकम्[१२], पयत्थलक्खणं–प्राकृतग्रन्थस्य संस्कृतटीका च विरचिता। विंशशतकस्थाचार्यपरम्परायां साहित्यसंवर्धने तस्य संगणकीकरणे च भवतः महद्योगदानं वर्तते।

□□□

## ९.आर्यिकाज्ञानमती
## (जन्मवर्षं- अक्टोबर, १९३४)

आर्यिकाज्ञानमती आचार्यवीरसागरस्य सुशिष्यारूपेण दिगम्बरपरम्परायां विंशशतकस्य साहित्यनिर्माणे अनवरतया निरता दृश्यते। साहित्यकर्मणि डी.लिट् इत्यादिनैकोपाधिभिः विभूषितायाः, विविधजनपुरस्करणैश्च सुसम्मानितायाः पूज्यार्यिकाज्ञानमती इति तपस्विन्याः जन्म १९ अक्टोबर, १९३४ तमे वर्षे टिकैतनगरे सञ्जातः। श्रीछोटेलालमोहिनीदेवीभ्यां पितृभ्यां सुलालिता भवति बाल्यकालादेव अलौकिकीमध्यात्मविद्यां प्रति विशेषरुचिमती आसीत्। चतुरशीतिवर्षोपदेशीया भवती विविधशोधसंस्थानानां विद्यापीठानां च सुचारुरूपेण संचालनेन जैनसाहित्यसेवाकार्यमनवरततया कुर्वन्ती वर्तते। अष्टसाहस्री न्यायग्रन्थस्य हिन्द्यनुवादपूर्वकं सम्पादनं भवत्या विधीयते। शान्तिसागरस्तुतिअष्टकं, शिवसागरस्तुति–अष्टकं,

---

[१२]. विशेषविवेचनं चतुर्थाध्याये अष्टककाव्यपरम्पराविभागे द्रष्टव्यम्।

आचार्यमहावीरकीर्तिस्तुतिअष्टकमिति अष्टकत्रिकं[१३] भवत्याः गुरुभक्तिं समग्रतया द्योतयति। कल्याणकल्पतरुः काव्यरचनायां छन्दःवैविध्यस्य सुतरां परिचयोऽध्येतॄणां भवति। भवत्याः विधानरचनाश्च सुप्रसिद्धा वर्तन्ते।

□□□

## १०.आर्यिकासुपार्श्वमती
## (जन्मवर्षं- वि.सं.१९८५)

आर्यिकासुपार्श्वमती आचार्यवीरसागरस्य सुशिष्यारूपेण दिगम्बरपरम्परायां विंशशतकस्य जैनसाहित्यनिर्माणे अनवरतया निरताऽऽसीत्। पूज्यार्यिकासुपार्श्वमती राजस्थानप्रान्तस्य नागौरमण्डले मैनसरग्रामे वि.स.फाल्गुनशुक्लनवमीतिथौ, १९८५ तमे वर्षे समजायत। भवत्याः गुरुभक्तिः जनमनांसि भवल्लिखितैः अष्टकस्तुतिकाव्यैः सदैव प्रफुल्लतां नयति।

भवत्याः मौलिकरचनाः सानुवादं सम्पादिताश्च रचनाः विंशशतके विख्याता वर्तन्ते। सागारधर्मामृतं, अनगारधर्मामृतं, नयविवक्षा, रत्नत्रयचन्द्रिका, राजवार्तिकं, प्रमेयकमलमार्तण्ड इत्यादिकृतयः सानुवादं सम्पाद्य प्रकाशिताः वर्तन्ते।

□□□

[१३] .चतुर्थाध्यायस्य अष्टककाव्यपरम्पराविभागे विशेषविवेचनं द्रष्टव्यम्।

## ११.महाकविमुनिश्रीप्रशमरतिविजयः

(जन्मवर्ष–वि.सं.२०२७)

श्वेताम्बरजैनपरम्परायां तपागच्छाधिपतित्वेन श्रीमतां रामचन्द्रसूरीश्वराणां शिष्यत्वं निर्वहति परमपूज्यो मुनिःप्रशमरतिविजयः। देशस्य गुजरात–महाराष्ट्रादिप्रान्तेषु अनवरतया विचरन्तः श्रुतविद्यायाः प्रचार–प्रसारे उदारमनसा प्रवृत्तो भवान्निति भवतो व्यक्तित्वस्य विशेषः। भवन्तः न केवलं साहित्यनिर्माणदक्षः अपितु विविधगायनादिकलास्वपि भवतां महती विलक्षणा रुचिर्वर्तते इति विशेषः।

भवतां विंशशतकस्थश्वेताम्बरजैनकृतिषु प्रमुखकृतीनामुल्लेखः निम्नरूपेण वर्तते।–

भवल्लिखितेषु प्रप्रधानतया माणिभद्रमहाकाव्यं वर्तते। श्रीसंवेगरतिः इत्येतत्पञ्चप्रस्तावविभक्तं लघुकाव्यं, हेमसंकीर्तनं, स्मृतिमन्दिरप्रशस्तिरित्येताः भवतां साहित्यकृतयः वर्तन्ते।

□□□

## १२.महाकविराचार्यश्रीघासीलालमहाराजः

(१८८५-१९७१)

पूज्याचार्यश्रीघासीलालमहाराजः स्थानकवासिश्वेताम्बरजैनपरम्परायामग्रगण्यः तपस्वी जैनसाहित्यस्य विंशशतकीयः साहित्यसृष्टा च वर्तते इति गौरवेण पतिपाद्यो विषयः। दीक्षागुरोः आचार्यश्रीजवाहरलालमहाराजवर्यस्य पावनशिक्षया मार्गदर्शनेन च भवता साहित्यजगति महती श्रुतसेवा समाचरिता इत्यत्र नास्ति संशयः। मेवाडप्रान्ते जसवंतगढनगरसमीपस्थे बनोलनाम्नि ग्रामे १८८५ तमे वर्षे भवतः जनिरजायत। कानिरामविमलाबाईभ्यां पितृभ्यां सुलालितो भवान् बाल्यकालादेव अतीव सरलमना सज्जनश्च आसीत्। देशस्य गुजरात-महाराष्ट्रादिप्रान्तेषु अनवरतया विचरन्तः श्रुतविद्यायाः प्रचार-प्रसारे उदारमनसा प्रवृत्तो भवान्निति भवतो व्यक्तित्वस्य विशेषः। महाकविवर्यः षोडशभाषाणां ज्ञाता, तथैवच, प्राकृतसंस्कृतयोः व्याकरणस्य, न्यायशास्त्रस्य, जैनदर्शनशास्त्रस्य, साहित्यस्य च महान् वेत्ता, साहित्यसर्जनकर्ता चासीदिति भवतां जैनसस्कृतवाङ्मयं प्रति अस्ति विशेषरूपेण योगदानम्। कोल्हापुरशासकः भवतां ज्ञानातिशयेन सन्तुष्टः कोल्हापुरशासनपुरुषः शासनाचार्यः इत्युपाधिभिः सम्मानयामास।

विंशशतके साहित्यकर्मणि स्थितेन भवता शान्तिसिन्धुमहाकाव्यं, लोकाशाहमहाकाव्यं लक्ष्मीधरचरितम्, इत्येते साहित्यसम्बद्धग्रन्थानां[१४], आर्हत्व्याकरणं[१५], आर्हत्व्याकरणटीका[१६] चेति व्याकरणसम्बद्धग्रन्थानां, न्यायरत्नसारः[१७], न्यायरत्नावलिः[१८], न्यायरत्नावलिटीका[१९]श्चेति न्यायसम्बद्धग्रन्थानां, गणधरवादः, मोक्षपदप्रकरणं, जिनागमतत्त्वदीपिका, सूक्तिसंग्रहः, तत्त्वप्रदीपः, कल्पसूत्रं, तत्त्वार्थसूत्रं, गृहधर्मकल्पतरुश्चेति दार्शनिकग्रन्थानां

---

[१४].विशेपविवेचनं चतुर्थाध्याये साहित्यसम्वद्धविभागे द्रष्टव्यम्।
[१५].विशेपविवेचनं चतुर्थाध्याये व्याकरणसम्वद्धविभागे द्रष्टव्यम्।
[16].विशेपविवेचनं पञ्चमाध्याये द्रष्टव्यम्।
[१७].विशेपविवेचनं चतुर्थाध्याये जैनन्यायसम्वद्धविभागे द्रष्टव्यम्।
[१८] विशेपविवेचनं चतुर्थाध्याये जैनन्यायसम्वद्धविभागे द्रष्टव्यम्।
[19] विशेपविवेचनं पञ्चमाध्याये द्रष्टव्यम्।

जैनाचारधर्मशास्त्रसम्बद्धग्रन्थानां मौलिकरूपेण रचनाः विधाय साहित्यजगतो महान्नुपकारो विहित इति गौरवस्य नो विषयः।

❑❑❑

# तृतीयोऽध्यायः– विंशशतकस्थजैनकविमनीषिणां परिचयः।

## १. डॉ.पं.पन्नालाल जैन (साहित्याचार्यः)

(१९११-२००१)

परिवर्तिनि अस्मिन् संसारे को वा न जायते मृतश्च को वा न भवति तेन जगतो किमपि न सिद्धं भवति परं, यस्य जातेन देशस्य वंशस्य वा समुन्नतिः वा भवति सः कश्चिद्महान् सञ्जातः इत्येवं जगति व्यवहृतं भवतीति एतादृशं एव जैनविद्वज्जनेषु पं.डॉ.पन्नालाल जैन विषयकं तथ्यम्। पं.पन्नालालजैन (साहित्याचार्य) नाम्ना ख्यातनाम महोदयः अपि तेष्वेव महापुरुषेषु एकः येन जन्मतः आरभ्य स्ववंशं नगरं देशं च स्वीयसाहित्यसेवया समर्पणभावेन च गौरवान्वितं कारितम्।

बुन्देलखण्डप्रान्तस्य सागर इति सांस्कृतिकनगरसमीपे पारगुवाँ इत्यस्मिन् ग्रामे पण्डितप्रवराणां डॉ.पन्नालालजी जैन महोदयानां जनिः ५मार्च,१९११ तमे वर्षे समजायत। पितृभ्यां शिशोरस्य नामकरणं बहुमूल्यरत्नस्य पन्ना इति नामानुरूपं पन्नालाल इति कृतम्। गच्छता कालेन अयमेव शिशुः लौकिकधार्मिकभौक्तिकशिक्षायाम् उत्कृष्टतां प्राप्नोत्। अध्ययननिष्ठदृढनिश्चयरूप-निरन्तरशास्त्रसाधनया अयमेव बालः जैनजैनेतरविद्वत्प्रवर्गेषु साहित्याचार्यरूपेण प्रतिष्ठामवाप। नित्यस्वाध्यायस्य(शास्त्राध्ययनस्य) संस्काराः पण्डितप्रवरेण प्रप्रथमतया स्वपितृभ्याम् एव अधिगताः। अतःअध्ययने बाल्यकालादेव अतिशायिनी रूचिः भवतामासीदिति निर्विशेषो विषयः।

कालक्रमे परिवारस्थाः जनाः रक्तज्वर-रुजा पीडिताः सञ्जातेति कृत्वा पण्डितप्रवराणां माता जानकीबाई सागरनगरे स्वीयभ्रातृसमीपे स्थातुं समागता। ततः पं.पन्नालालमहोदयः सागरस्थिते गणेशप्रसादवर्णी इति सुविख्यातानुव्रतधारिगृहस्थेन सह परिचितः। तेनच तत्रत्य दिगम्बरजैनपाठशाला (मोराजी) इत्यस्मिन् विद्यालये तस्य प्राथमिकी शिक्षा निःशुल्कं सम्पन्ना।

व्याकरणमध्यमां परीक्षां भवान् ततः एव पारङ्गतः। ततः पूज्यश्री गणेशप्रसादवर्णी महापण्डितानां मार्गदर्शनेन स्याद्वादमहाविद्यालये वाराणसी नगरे उच्चशिक्षाम् अधिगत्य पुनः १९३१ तः आरभ्य पुनः सागर(मोराजी) स्थिते श्रीगणेशवर्णीदि.जैनसंस्कृतमहाविद्यालये प्राध्यापकरूपेण प्राचार्यरूपेण अध्ययन– अध्यापनकर्मणि प्रकर्षेण सन्निहितः। भवता बंगसंस्कृतशिक्षापरिषत् कोलकातातः काव्यतीर्थपरीक्षां(१९३०), वाराणसेयविश्वविद्यालयतः साहित्याचार्यपरीक्षां (१९३६), उत्तीर्णीकृत्य साहित्याचार्यः इत्युपाधिं अलञ्चकार। कविहरिश्चन्द्रविरचितस्य जीवन्धरचम्पूकाव्यस्य सटीकसम्पादनकार्यनिमित्तेन भवान् मित्रपुरस्कारेण सम्मानितः। किंबहुना, १९६९–७० तमे शैक्षणिकवर्षे भारतस्य राष्ट्रपतिना भवान् महता गौरवेन सुसम्मानितः।

श्रद्धेयपण्डितप्रवरस्य जीवननिर्मातृगुरुजनेषु तात्कालीनमूर्धन्यविद्वत्सु पूज्यश्रीगणेशप्रसादवर्णी, स्याद्वादवाचस्पतिः पं.दयाचन्द्रजी सिद्धान्तशास्त्री, पं.हजारीलाल न्यायतीर्थः, पं.बालचन्द्र प्रतिष्ठाचार्यः, पं.महेन्द्रकुमारजी काव्यतीर्थः इत्यादीनां समावेशः आसीदिति पण्डितप्रवरैः लिखितानां कार्तज्ञसूचकपद्यैः एवं सूच्यते–

येषां कृपाकोमलदृष्टिपातैः सुपुष्पिताभून्ममसूक्तिवल्ली। तान् प्रार्थये वर्णिगणेशपादान् फलोदयं तत्र नतेन मूर्ध्ना।। यस्यार्जवो वै सततं मनो मे धिनोति शिष्यैरूपसेव्यमानम्। बोधाधिकं धर्मगुरुं नमामि दयासुधादीधितिमालिनं तम्।। कैलासचन्द्रोऽपि हजारिलालो माणिक्यचन्द्रोऽपि मुकुन्दशास्त्री। छेदीप्रसादोऽपि च लोकनाथो ब्रह्मण्यशास्त्री कपिलेश्वरश्च।। स बाबुरामोऽपि सुबोधशाली महेन्द्रदत्तोऽपि गुरुप्रकल्पः। स बालचन्द्रोऽपि च मूलचन्द्रो गुरून् यथायोग्यमिमान्नमामः।। [१] ०९मार्च२००१ तमे दिने ९०वर्षीयः भवान् समाधिदशा–लीनः समजायत।

१ साहित्याचार्य डॉ.पं.पन्नालाल जैन अभिनन्दनग्रन्थः,२.१७

श्रीमतः पण्डितप्रवरस्य साहित्यिकयोगदानमस्य प्रदीर्घसंस्कृतसेवया निष्ठया च विज्ञातुं शक्यम्। भवद्भिः मूलभूतसंस्कृतपुराणानि [२] सानुवादं सम्पादितानि। वादीभसिंहसूरिविरचितस्य गद्यचिन्तामणिकाव्यग्रन्थस्य, कविहरिश्चन्द्रविरचितस्य जीवन्धरचम्पूकाव्यग्रन्थस्य, महाकविश्रीमदर्हद्दासविरचितस्य पुरुदेवचम्पूप्रबन्धस्य च सटीकं [३] सम्पादनं तत्रभवता विहितम्। पञ्चसंख्याकानां भक्तामरप्रभृतीनां स्तोत्रकाव्यानां [४] संस्कृतटीकया सह सम्पादनं भवतः स्तोत्रकाव्यरुचिं दर्शयति। पण्डितप्रवरस्य पन्नालालमहोदयस्य मौलिकरचनाः [५] १. सम्यक्त्वचिन्तामणिः, २.सद्ज्ञानचन्द्रिका, ३.सम्यक्चारित्रचिन्तामणिः, ४. धर्मकुसुमोद्यानम्, ५. सामायिकपाठः चेति सन्ति। श्रीपालचरितमिति संस्कृतगद्यकाव्यं तत्रभवतामप्रकाशितं वर्तते।

एवं पण्डितप्रवरस्य आसमाध्यन्तं विद्योपासनं उपरितनसाहित्यपरिचयस्य परिचायकमित्यत्र न शिष्यते लेशोऽपि सन्देहः।

---

[२] .द्र.सप्तमाध्याये विशेपविवेचनम्।
[३] .द्र.पष्ठाध्याये विशेपविवेचनम्।
[४] .द्र.पष्ठाध्याये विशेपविवेचनम्।
[५] द्र.पञ्चमाध्याये तत्तत्प्रविभागे विशेपविवेचनम्।




□□□

[६] .मौलिकसंस्कृतटीकया साकं सम्पादितकृतिः।
[७] . मौलिकसंस्कृतटीकया साकं सम्पादितकृतिः।
[८] .मौलिकसंस्कृतटीकया साकं सम्पादितकृतिः।
[९] .मौलिकसंस्कृतटीकया साकं सम्पादितकृतिः।

## २. डॉ.पं.जगन्मोहनलाल जैन (शास्त्री)

(ऑगस्ट१९०१-१९९५)

पं.जगन्मोहनलाल जैन महोदयानां जन्म ०६ आगस्ट १९०१ तमे वर्षे मध्यप्रदेशप्रान्तस्य शहडोलग्रामे जातः। महोदयः न्यायसिद्धान्तशास्त्री इति उपाधिना साहित्यजगति चिरपरिचितः वर्तते। महाराष्ट्रप्रान्तस्य सोलापूरनगरे स्थितायाः दिगम्बरजैनपरीक्षालयसंस्थातः महोदयेन न्यायसिद्धान्तशास्त्रीति परीक्षा उत्तीर्णीकृतेति कारणात् महोदयस्य नाम्ना साकं पं.जगन्मोहनलाल शास्त्री'ति उपाधिपदमपि सर्वदा परिचितं उपयुज्यते विद्वज्जनैः। विद्याध्ययनानन्तरं ०१जुलै १९२३ तः वर्ष १९२७पर्यन्तं महोदयः मध्यप्रदेशप्रान्ते कटनीनगरे स्थितस्य श्रीशान्तिनिकेतनजैनसंस्कृतविद्यालयस्य प्राचार्यपदरूपेण सेवामकरोत्।

डॉ.पं.जगन्मोहनलालशास्त्री महोदयः स्वातन्त्र्यसग्रामेणापि सुतरां परिचितः आसीत्। राष्ट्रियप्रतिकारकर्म (National Movements)मध्ये महोदयस्य १९२५तः १९४० पर्यन्तं सक्रियसहभागित्वमासीत्। महोदयः महाराष्ट्रप्रान्ते कुन्थलगिरिस्थितस्य श्रीदिगम्बरजैनसिद्धक्षेत्रस्य अध्यक्षरूपेण, दिगम्बरजैनपरवारसभायाः सचिवरूपेण तथाच, मथुरास्थितस्य जैनसंघस्य वित्तसचिवरूपेण पदानि अभूषयत्। महोदयस्य वाराणस्यां स्थितेन श्रीस्याद्वादमहाविद्यालयेन, सागरनगरे स्थितेन श्रीगणेशप्रसादवर्णीसंस्कृतमहाविद्यालयेन, जबलपुरस्थितेन जैनगुरुकुलेन च साकं नितरामन्तस्थस्सम्बन्धः आसीत्। विद्वजनैः १९९० तमे वर्षे साधुवादपूर्वकं गौरवग्रन्थः प्रकाशितः। सन्तशिरोमणेः आचार्यविद्यासागरमुनीन्द्रस्य पावनसन्निधौ कुण्डलपुरतीर्थस्थले सल्लेखनामधिगतः।

महोदयस्य श्रुतसेवा सर्वजनसमादरणीया वर्तते। वीरसन्देशः, जैनसन्देशः चेति पत्रिकाद्वयस्य भवान् सम्पादकरूपेण कार्यमपश्यत्। परवारबन्धुरित्यस्याः (अधुना स्थगितायाः) पत्रिकायाः अपि

तत्रभवान् सम्पादकः आसीत्। महोदयानां पद्मनन्दिश्रावकाचार[१०] इति जैनाचारशास्त्रविषयकं पुस्तकं, अध्यात्म-अमृतकलश चेति संस्कृतपुस्तकद्वयं प्रकाशनाधीनं वर्तते। महोदयः श्रावकधर्मप्रदीप ग्रन्थस्य संस्कृतटीका [११] लेखनमकरोत् किञ्च, एतट्टीकालेखनार्थं वीरनिर्वाणभारती'इति पुरस्कारेण १९७४ तमे वर्षे जैनविद्वज्जनैः सुसम्मानितः।



[१०]. चतुर्थाध्याये धर्मशास्त्रप्रविभागे विशेपविवेचनमवलोकनीयम्।
[११]. पञ्चमाध्याये विशेपविवेचनमवलोकनीयम्।

## ३.महाकवि पं.मूलचन्द जैन(शास्त्री)

(१९०३-१९८६)

पं.मूलचन्द्रशास्त्री महोदयः स्वीयसारस्वतसेवायां विद्वत्तल्लजेषु सुविख्यातो वर्तते। तर्कशात्रं काव्यं चेति वज्रकुसुमयोरिव परस्परविरोधिद्वयं तत्रभवति युगपन्निवसति। शास्त्रीमहाभागानां काव्यानि आध्यात्मिकभावभूमिं स्पृशन्ति प्रोद्भूतानि चिरन्तनभारतीयकाव्यशास्त्रीयपरम्परां पुष्टीकुर्वन्ति।

पं.मूलचन्द्रशास्त्री महोदयस्य जन्म मध्यप्रदेशस्थिते सागरमण्डले मालथोंनग्रामे वि.सं.१९६० भाद्रपदाष्टमीतिथौ जातः। पितृभ्यां सल्लोसटोरेलालाख्याभ्यां सुसंस्कारितः सुलालितश्च मूलचन्द्र इति बालः प्राथमिकीं स्वग्रामे प्राप्य उच्चशिक्षार्थं वाराणसीस्थिते श्रीगणेशप्रसादवर्णीमहोदयेन संस्थापिते स्याद्वाद महाविद्यालये प्रविष्टः। तत्र श्रीमता अम्बादासशास्त्रीमहाभागैः भवान् अध्यापितः। अस्य जीवनविषयकः परिचयः निम्नपद्येन सुगम्यो भवति-

सागरंमण्डलाधीनो मालथोनेति संज्ञकः। ग्रामो जनधनाकीर्णः सोऽस्ति मे जन्मभूरिति।।

सल्लो माता पिता मे श्रीसटोलेलाल नामकः। जिनधर्मानुरागी स परवार कुलोद्भवः।। इति।

मूलचन्द्रशास्त्रीवर्यस्य जीवनं नैकापद्भिः परिपूर्णमासीत्। बाल्यकाले पण्डितवर्यस्य सार्धद्विवर्षदेशीयकाले एव पितुः मृत्युरजायत। मात्रा महता परिश्रमेण बालोऽयं सुलालितः। एकहस्तेन भवान् विकलाङ्गोऽपि आसीत्। किञ्च, मात्रे भवान् एकाकी पुत्र आसीत्। इति जीवनवृत्तान्तः तेषां वर्धमानचम्पूकाव्यतः निम्नपद्यैः ज्ञातो भवति-

मदेकपुत्रां जननीं विहाय स तातपादः परमल्पकाले।
दिवंगतस्तत्समयेऽहमासं सार्धद्विवर्षायुषि वर्तमानः।।

वैधव्यकष्टेन संमर्दिताम्बा मां पालयामास यथा कथञ्चित्।

वामःकरो मे ह्यशुभोदयेन भग्नोऽभवद्रिक्तधनस्य हन्त।।

सत्स्वपि विपदापन्नजीवने पण्डितवर्यः न केवलं स्वमातरं प्रति अपितु सर्वस्त्रीजातिं पति सदैव आदरेण युक्तोऽतिष्ठत्। सर्वस्यापि जीवनस्य वाङ्मयकृतिप्रपञ्चं स मातुः चरणे समर्पयति। भार्यां च साहित्यसर्जने सहयोगिनीं प्रतिपाद्य तामपि प्रति आदरभावम् अभिव्यनक्ति। तद्यथा–

मातस्त्वया मम कृतोऽस्ति महोपकारो, यावांस्तदंशमपि पूरयितुं न शक्तः।

एतन्नवीनकृतिवृद्धियुतं विधाय, प्रत्यर्पयामि महिते! तद्धुरीकुरुष्व।।

न्यायशास्त्रे साहित्यशास्त्रे च कृतभूरिपरिश्रमत्वात् न्यायशास्त्रविषयकः न्यायरत्नम् [१२] इति भवल्लिखितः ग्रन्थः। अस्य न्यायरत्नस्य त्रिविधस्वोपज्ञटीका अपि तत्रभवता लिखिताः। हरिभद्रसूरिकृतस्य षोडशकप्रकरणग्रन्थस्य १५००० श्लोकप्रमाणटीका, विषयहर्षसूरिप्रबन्धस्य च ४५० श्लोकप्रमाणसंस्कृतटीका चेति प्रकाशितसाहित्यरूपेण सकलविद्वज्जनपरिचितं वर्तते। लोकाशाहमहाकाव्यं [१३] , वचनदूत [१४] मिति खण्डकाव्यं, वर्धमानचम्पू [१५] रिति चम्पूकाव्यं, पादपूर्तिपराणि स्तोत्रकाव्या [१६] नि भवता रचितानि। अष्टसहस्त्री, आप्तमीमांसा चेति जैनन्यायग्रन्थद्वयं हिन्दीभाषायां अनूदितम्। औपपातिकसूत्रं, राजप्रश्नीयसूत्रं, जीवाजीवाभिगमसूत्रं, जम्बूद्वीपप्रज्ञप्तिः, नन्दीसूत्रं, उत्तराध्ययनम् इत्यादिआगमग्रन्थानां हिन्द्यनुवादं विधाय भवता प्रकाशनं विहितम् इति बाहुल्येन श्वेताम्बरजैनसंस्कृतग्रन्थानां संवर्धने सरलीकरणे च महद्योगदानं इत्यत्र नास्ति लेशोऽपि संशयः।

□□□

[१२] .विशेपविवेचनं चतुर्थाध्यायस्य तत्तद्विभागे द्रष्टव्यम्।
[१३] . तथैव।
[१४] . तथैव।
[१५] . तथैव।
[१६] . तथैव।

## ४.डॉ.पं.दरबारीलाल कोठिया

(१९१३-२०००)

डॉ.पं.दरबारीलाल कोठिया विद्वत्तल्लजेषु श्रेष्ठतमः वीरनिर्वाणभारतीदिल्लीतः न्यायालङ्कारः, मूडबिद्रीतः न्यायरत्नाकरः, द्रोणगिरितः न्यायवाचस्पतिश्चेति उपाधिभिः अलङ्कृतः। स्याद्वादमहाविद्यालये वाराणस्यां च वर्णी-पुरस्कारेण सुसम्मानितः। काशीहिन्दुविश्वविद्यालयतः संस्कृतविषये एम.ए.(१९५७), विद्यावारिधिः(१९६९) चेति उपाधिद्वयं अधिगम्य ततः एव जैनदर्शने अधिव्याख्यातापदेन साकं सेवानिवृत्तः।

उत्तरप्रदेशस्य झांसीमण्डले सोरई ग्रामे ०१सप्टेंबर, १९१३तमे वर्षे प्राप्तजन्माऽयं महिलारत्न -चमेलीबाई कोठिया सह विवाहितः। साढूमलस्थितस्य दिगम्बरजैनसंस्कृतमहाविद्यालयस्य वाराणस्यां स्थितस्य च स्याद्वादमहाविद्यालयस्य प्रथमश्रेण्याम् उत्तीर्णछात्रोऽयं नैकवर्षाणि यावत्पर्यन्तं स्याद्वादप्रचारिणीसभ्यायाः सचिवरूपेण सेवामकरोत्। काशी हिन्दुविश्वविद्यालये कार्यं कुर्वताऽनेन मध्यप्रदेशस्थितानि पपौरा (तीथस्थलं), मथुरायाः चौरासिगुरुकुलं, सरसावा संस्था, देहलीस्थ- समन्तभद्रविद्यालयः, बडौतनगरस्थितः दि.जैनमहाविद्यालयः चेत्यादिन्यः शैक्षणिकसंस्थाः सेविताः। १९८२ तमे वर्षे वाराणस्यां भवतामभिनन्दनग्रन्थः प्रकाशितः।

दरबारिलालकोठियामहोदयः अखिलभारतीयजैनविद्वत्परिषदः अध्यक्षः, श्रीगणेशवर्णी दि.जैनसंस्थानस्य, वीरसेवामन्दिरसंस्थानस्य च सचिवः, वाराणस्यां स्थितस्य स्याद्वादमहाविद्यालयस्य उप-अधिष्ठाता इत्येवं विविधकार्यकारिपदैः जनसेवायामविरततया निरतः आसीत्।

भवतां मौलिकरचनासु १.जैनदर्शने प्रमाणचिन्तनम्, २.जैनप्रमाणमीमांसायाः स्वरूपम्, ३.जैनदर्शने करुणायाः स्वरूपम्, ४.जम्बूजिनाष्टकम्, ५.द्रव्यसंग्रहस्य संस्कृतटीका,

६.न्यायदीपिकायाः प्रकाशाख्यं[१७] टिप्पणम्, ७.न्यायदीपिकायाः प्रश्नावली चेति सन्ति। एवमेव श्रीमद्विद्यानन्दविरचितः आप्तपरीक्षा[१८] आप्तपरीक्षालङ्कृतिसंस्कृतटिप्पणेन साकं प्रकाशितम्। स्याद्वादसिद्धिः[१९], प्रमाणप्रमेयकलिका[२०], अध्यात्मकमलमार्तण्डः[२१] द्रव्यसंग्रहः[२२] प्रमाणपरीक्षा, समाधिमरणोत्साहदीपिकाः, पत्रपरीक्षा, जैनपुराणकोषः, अष्टसहस्री चेत्यादीनां मूलसंस्कृतन्यायग्रन्थानां संशोधनपुरस्सरं सम्पादनं भवता विहितमिति संस्कृतस्य न्यायशाखाविषयकं भवद्योगदानं प्रशसनीयं विद्वज्जनवृन्दानाम्।

□□□

[१७]. पञ्चमाध्याये विशेपविवेचनं द्रष्टव्यम्
[१८].द्र.पञ्चमाध्याये विशेपविवेचनम्।
[१९].द्र.पष्ठाध्याये विशेपविवेचनम्।
[२०]. तत्रैव।
[२१]. तत्रैव।
[२२]. तत्रैव।

## ५.(बॅरिस्टर) जुगमोहनलाल जैनी

(१८८१-१९२७)

उत्तरप्रदेशस्य सहारनपुरनगरे अग्रवालपरिवारे ३०.०४.१८८१ तमे वर्षे प्राप्तजन्मनाऽनेन विद्वन्मनीषिना संस्कृतसाहित्यस्य आधुनिकसमाजे महती सेवा कृता। १९२२-२५वर्षं यावत् इलाहाबादविश्वविद्यालयतः एम.ए.(संस्कृतम्) एल.एल.बी. चेति परीक्षाद्वयमुत्तीर्य साहित्यकर्मणि व्यस्तः सञ्जातः। १९२५ तमे वर्षे किंग एडवार्डमहाविद्यालये सहायकप्राध्यापकरूपेण भवान् नियुक्तः आसीत् कालान्तरे च मोरिसमहाविद्यालये नागपुरे सेवास्थलान्तरितः कृतः आसीदिति १९४४ तमवर्षं यावद्भवता महाविद्यालयेऽस्मिन् सेवाकार्यं कृतमासीत्। १९४४ तमे वर्षे नागपुरविश्वविद्यालयतः डी.लिट उपाधिना सभाजितः। ततः सेवानिवृत्यनन्तरमपि १९६० पर्यन्तं भवन्तः मुज्जफरनगरस्थिते प्राकृतं जैनदर्शनविषयके उच्चशिक्षासंशोधनकेन्द्रे निर्देशकरूपेण कार्यमकुर्वन्। १९६९ पर्यन्तं जबलपुरविश्वविद्यालये संस्कृतपालिप्राकृतविभागे विभागप्रमुखरूपेण सेवाकार्यमकुर्वन्। एवं नैवविधसंस्थासु भवतां योगदानं वर्तते।

भवत्सम्पादिता सुदर्शनचरित्रमिति संस्कृतकाव्यस्य रचना संस्कृतसाहित्ये सुविख्याता वर्तते।

□□□

## ६.डॉ.पं. महेन्द्रकुमार जैन (न्यायाचार्यः)

(१९११-१९५९)

मध्यप्रदेशप्रान्तस्य बुन्देलखण्डस्थिते सागरमण्डले खुरई ग्रामे प्राप्तजन्मायं डॉ.पं.महेन्द्रकुमारजैनमहोदयः जैननैय्यायिकेषु मूर्धन्यतमः परिगणितः। बीनानगरे प्राथमिकीं शिक्षामवाप्य इन्दौरनगरस्थिते श्रीहुकुमचन्दमहाविद्यालये उच्चशिक्षां प्राप। शास्त्रीपरीक्षां न्यायतीर्थपरीक्षां च उत्तीर्णीकृत्य १९३०तमे वर्षे भवान् स्याद्वादमहाविद्यालये दर्शनविषये प्राध्यापकरूपेण कार्यरतः सञ्जातः। स्वीयत्रयोदशवर्षीयशैक्षणिकसेवायां भवता दुष्प्राप्याणां हस्तलिखितानां संकलनं विधाय श्रीअकलंकसरस्वतीभवनं समृद्धदशायामानीतम्। अष्टचत्वारिंशतमवर्षीयः भवान् अकाले दिवंगतः। १९९६ तमे वर्षे भवतामभिनन्दनग्रन्थस्य प्रकाशनं दमोहनगरस्थजैनविद्वद्वर्गैः कृतम्।

सेवाकाले ग्रन्थसम्पादनकर्मणि निरतेन भवता न्यायाचार्यपरीक्षा अपि उत्तीर्णीकृता तथा च १९४४ तमे वर्षे भारतीयज्ञानपीठे सेवारतः सञ्जातः। अत्रत्य सेवाकाले ज्ञानोदय पत्रिकायाः सम्पादनं समारब्धम्। उत्तरवर्तिनि काले वारणसीहिन्दुविश्वविद्यालये बौद्धदर्शनविषये प्राध्यापकरूपेण तथैव वाराणसेयसंस्कृतविश्वविद्यालये जैनदर्शनस्य प्राध्यापकरूपेण भवान् कार्यमपश्यत्। नैकानां मौलिकजैनन्यायग्रन्थानां सम्पादनं[२३] प्रकाशनं च भवता साधितम्।

□□□

[२३] . विशेपविवेचनं पष्ठाध्याये द्रष्टव्यम्।

## ७.पं.हीरालाल जैन (साहित्याचार्यः)

(१९०४-१९८३)

उत्तरप्रदेशप्रान्तस्य झांसीमण्डले साढूमलग्रामे १९०४ तमे वर्षे प्राप्तजन्मा अयं पण्डितवर्यः विशारद् न्यायमध्यमा इत्युभयपरीक्षोपाधिं साढूमलपाठशालातः एव उत्तीर्णीचकार। १९२३ तमे वर्षे हुकुमचंददिगम्बररजैनमहाविद्यालयतः न्यायतीर्थपरीक्षां, १९२४ तमे वर्षे जबलपुरस्थितशिक्षा मन्दिरतः सिद्धान्तशास्त्रीपरीक्षां अधीत्य सिद्धान्तशास्त्री इति उपाधिना जैनविद्वजनेषु सुविख्यातः सञ्जातः। द्वादशवर्षं यावद् महोदयेन वाराणसीस्थस्याद्वादमहाविद्यालये, ब्यावरस्थिते दिंजैनमहाविद्यालये च पाठनकार्यं सुष्ठु साधितम्। ब्यावरस्थितस्य ऐलकपन्नालालदि.जैनग्रन्थालय तथा शोधसंस्थानस्य व्यवस्थापनकार्यमपि नैकानि वर्षाणि यावद्भवद्भिः अवलोकितमिति गौरवस्य विषयः श्रुतसंधारणे भवताम्। अनवरत-जैनश्रुतसेवया भवान् १९८३ तमे वर्षे दिवंगतः।

भवतां श्रुतसेवासंबन्धिकार्याणि मौलिकानि सन्ति। संयुक्तरूपेण भवता षट्खण्डागमग्रन्थस्य षड्भागानां सम्पादनं सानुवादं प्रकाशनं च श्रीमन्तसेठसिताभाई लक्ष्मीचन्द्र जैनसाहित्य उद्धारक फंडकार्यालय, अमरावती(महा.)तः १९५५ तमे वर्षे कृतम्। भवदीयकृतीनां प्रकाशनानि वीरशासनसंघकोलकातातः, भारतीयज्ञानपीठकाशीतः, चौखम्भासंस्कृतसीरिज,वाराणसीतः जातानि सन्ति। षोडशसंस्कृतपौराणिकग्रन्थानां स्वतन्त्रतया सम्पादनं भवता एकलेन कृतं किञ्च, कषायपाहुडसूत्रस्य, प्रमेयरत्नमालायाः, जिनसहस्रनामस्तोत्रकाव्यस्य, जैनधर्मामृतं, द्रव्यसङ्ग्रहः, सुदर्शनचरित-दयोदय-वीरोदयकाव्यरचनायाः[२४], च संशोधनपुरस्सरं सम्पादनं संस्कृतवाङ्मयस्य सेवायां भवतो महद्‌योगदानं दर्शयति।

भवदनूदिताः पुरुषार्थसिद्‌ध्युपायः, पुरुषार्थानुशासनम्, परमागमसारः, परमात्मप्रकाशः इत्येते संस्कृतग्रन्थाः अद्यावधिःप्रकाशनाधीनाः सन्ति।

□□□

[२४].विशेषविवेचनं पञ्चाध्याये द्रष्टव्यम्।

## ८.डॉ.नेमिचन्द्र जैन (ज्योतिषाचार्यः)

(१९१५-१९७४)

डॉ. नेमिचन्द्रशास्त्री ज्योतिषाचार्यस्य जैनसंस्कृतसाहित्यस्य अभिवर्धने महद्योगदानं वर्तते। राजस्थानप्रान्तस्य धौलपुरमण्डले बसईघियाराम ग्रामे प्राप्तजन्मनः भवतः पितुः एकवर्षीयाल्पायुषि भवद्बाल्यकाले एव स्वर्गवासो जातः। अतः मात्रा महता कष्टेन भवान् लालितः पालितः अभिवर्धितश्चेति कृत्वा पारिश्रमिकजीवनस्य निष्ठायाश्च महान् अनुभवी भवान् वर्तते। स्वशैक्षणिकक्षेत्रे भवता महता परिश्रमेण अधीतम्। प्राथमिकीं शिक्षां राजखेडग्रामे समाप्य उच्चशिक्षणं वाराणसीस्थ-स्याद्वादमहाविद्यालये पूर्णतां नीतम्। गणितशास्त्रे ज्योतिषशास्त्रे च विशेषश्रद्धावान्नासीदिति कृत्वा भारतीयज्योतिर्वाङ्मयस्य कृते भवतो महद्योगदानं वर्तते।

तत्रभवता न्यायतीर्थः ज्योतिषतीर्थः काव्यतीर्थश्चेत्येताः तिस्रःपरीक्षाः बंगसंस्कृतपरिषत्संस्थातः, शास्त्री, ज्योतिषाचार्यः, साहित्यरत्नं चेति परीक्षात्रयं वाराणसी विश्वविद्यालयतः, एम.ए.(संस्कृत)परीक्षा आगरा विश्वविद्यालयतः, एम.ए.(प्राकृत)परीक्षा बिहारविश्वविद्यालयतः इत्येवं नैकाः परीक्षाः उत्तीर्णीकृताः। १९६२तमे वर्षे 'संस्कृतकाव्यों के विकास में जैनकवियों का योगदान' इति विषये बागलपुरविश्वविद्यालयतः पीएच.डी., १९६७ तमे च वर्षे मगधविश्वविद्यालयतः डी.लिट् इत्युपाधिः अधिगता।

डॉ.नेमिचद्र शास्त्रीमहाभागः देवकुमारजैनप्राच्यविद्यासंशोधनसंस्थायाः निर्देशकरूपेण कार्यमपश्यत्। तथाच, आरानगरस्थिते हरप्रसाद दास जैनसंस्कृत महाविद्यालयेऽपि संस्कृतप्राकृतभाषाविभागस्य अध्यक्षरूपेण कार्यमपश्यत्। जैनसिद्धान्तभास्करपत्रिकायाः, जैन एन्टिक्वेरीपत्रिकायाः, मागधम्पत्रिकायाश्च भवान् सम्पादकः आसीत्। ज्योतिषविषयस्य भवान्

ख्यातनामा जैनविद्वान् आसीत्। अस्मद्दैवदुर्विपाकवशात् १० जानेवारी, १९७४ तमे दिने परमसाहित्यसेवकः भवान् दिवंगतः।

भवल्लिखितं मुहूर्तमार्तण्डः, भारतीयज्योतिषं[२५] चेति ज्योतिषशास्त्रविषयकम् अमूल्यनिधिद्वयं ग्रन्थरत्नं उत्तरप्रदेशसर्वकारपक्षतः सम्मानमवाप। भद्रबाहुसंहिता [२६], अलङ्कारचूडामणिः, केवलप्रश्नज्ञानचूडामणिः, व्रततिथिनिर्णयः, मुहूर्तदर्पणः, रत्नाकरशतकं, धर्मामृतं, अलङ्कारचिन्तामणिः, इत्यादिसंस्कृतग्रन्थानां सानुवादं सम्पादनं भवद्भिः विहितम्। चन्द्रसंस्कृतव्याकरणम्[२७], संस्कृतगीतिकाव्यानुचिन्तनम्[२८] चेति भवतां साहित्यरचनाः सर्वविश्रुताः वर्तन्ते। संस्कृतपत्रिकयोः मगधपत्र-जैनसिद्धान्तभास्करयोः सम्पादनकार्यं भवता नवनवीनैः प्रयोगैरन्वितं कृतमासीत्।

□□□

[२५]. चतुर्थाध्याये ज्योतिपविपयकप्रविभागे द्रष्टव्यम्।
[२६]. तत्रैव।
[२७]. तत्रैव व्याकरणविपयकप्रविभागे द्रष्टव्यम्।
[२८]. तत्रैव साहित्यविपयकप्रविभागे द्रष्टव्यम्।

## ९.डॉ.अमृतलाल शास्त्री

(जुलाई,१९१७)

पं. अमृतलाल जैन (शास्त्री)वर्यस्य जनिः उत्तरप्रदेशप्रान्तस्य ललितपुरमण्डले बमराना नाम्नि ग्रामे ०७ जुलाई १९१७ तमे वर्षे अजायत। श्रीबुद्धसेन–सोनादेवीभ्यां पितृभ्यां सुलालितस्य भवतो मातापितरौ भवत्स्वल्पायुषि एव दिवंगतौ इति कारणात् ग्रामस्थजैनश्रेष्ठिना चन्द्रभानाख्येन भवतः शिक्षाध्ययनस्य पुण्यकर्मणि सहयोगः कृतः। भवता साढूमल–बरूआसागर–ललितपुर–मुरेना–वाराणसीनगरेषु विविधशिक्षासंस्थासु स्वीयमध्ययनं पूर्णतां नीतम्। न्यायतीर्थपरीक्षा, दर्शनाचार्यपरीक्षा, साहित्याचार्यपरीक्षा च भवता वाराणस्यामुत्तीर्णीकृता। १९४४ तः आरभ्य १९५४ इति द्वादशवर्षाणि यावत् अध्यापनकार्यं स्याद्वादमहाविद्यालये कारितम्। अधिव्याख्यातारूपेण भवान् वाराणसेयसंस्कृतविश्वविद्यालये अपि कार्यं कृतवान्। तत्पश्चादिदानीं भवन्तः लाडनूं स्थिते जैनविश्वभारती विश्वविद्यालये कार्यरताः सन्ति। भवन्तः सदैव स्वाभिमानी, सदाचारी, निर्लिप्तस्वभावी, स्वतन्त्रविचारचारी प्राध्यापकरूपेण कार्यं करोतीति विशेषः।

साहित्यदर्शनव्याकरणशास्त्राणां सम्यगध्ययनकृतो भवतः संस्कृते आशुकविरूपेण प्रसिद्धिर्वर्तते। विलक्षणप्रतिभया एते एकस्यां रात्रौ शतपद्यानां रचनामकरोदिति काचिद्भवतां ख्यातिः। गणेशप्रसादवर्णीमहोदयनां प्रशस्तिपत्रे भवद्भिःलिखितं–

पदे पदे यद्यपि सन्ति पण्डितास्तथापि तुल्यो भवतो न दृश्यते।
विशिष्टता पुण्यगुणानुगामिनी समा समेषां विदुषां न जायते।। इति

संस्कृतपद्यमिदं भवतां काव्यप्रतिभां व्यक्तीकर्तुं सफलीभवतीत्यत्र नास्ति कस्यापि विसंवादः।

भवता द्रव्यसङ्ग्रहः, चन्द्रप्रभचरितम्, तत्त्वसंसिद्धिः इत्यादिजैनग्रन्थानां सानुवादं सम्पादनं कृतम्। संस्कृतभाषायां विशेषाधिकारित्वात् भवता स्वीयगुरुं प्रति 'वर्णीसूर्यः', 'गोपालदासो गुरुरेक एव', श्रद्धाप्रसूनाञ्जलिः चेति तिस्रः लघुकाव्यरचनाः [२९] विरचिताः। पुण्यपाररीकः, पिचण्डस्फोटः इति खण्डकाव्यद्वयं भवद्भिरचितं वर्तते।

□□□

[२९] .विशेषविवेचनं चतुर्थाधिकारे लघुकाव्यविभागे द्रष्टव्यम्।

## १०.पं.माणिकचद्र कौन्देयः

(वि.सं.१९५४-)

संस्कृतभाषायाः धर्मविषयकसाहित्यसर्जने पं.माणिकचन्द्र कौन्देयः न्यायाचार्यस्य विशिष्टं शीर्षस्थं च स्थानं वर्तते। भवतो जन्म आगरामण्डले चावलीनाम्नि ग्रामे वि.सं.१९५४ (ईस.१८८६) तमे वर्षे जातः। चौरासी, मथुरास्थिते विद्यालये प्रवेशिका खुर्जाक्वींसमहाविद्यालयतः प्रथमा परीक्षा उत्तीर्णीकृता। कतिचिद्वर्षाणि यावत्स्वीयभ्रात्रा साकं सिद्धान्तकौमुद्याः व्याकरणग्रन्थस्य अध्ययनं कृतम्। ततः परं जयपुरनगरे स्थित्वा संस्कृतव्याकरणस्य, साहित्यस्य, न्यायग्रन्थानां च तलस्पर्शिज्ञानमधिगन्तुं व्यवसितम्। अत्रैव न्यायोपाध्याय उपाधिना भवान् सभाजितः। तत्पश्चात् स्याद्वादमहाविद्यालये वाराणस्यां पूर्वन्यायमध्यमातः आरभ्य आचार्यपरीक्षां यावदधीतम्। श्रीपन्नालालदिगम्बरजैनमहाविद्यालये फिरोजाबादनगरे धर्माध्यापकरूपेण नियुक्तः आसीत्।

भवद्भिः तत्त्वार्थश्लोकवार्तिकालङ्कार-ग्रन्थस्य तत्त्वार्थचिन्तामणिः [३०] इति नाम्ना संस्कृतटीका मौलिकतया विरचिता।

□□□

[३०] .चतुर्थाध्याये व्याख्यानविभागे विशेपविवेचनमवलोकनीयम।

## ११.पं.फूलचन्द्र शास्त्री जखौरा

(जन्मवर्ष–१९१०)

पण्डितवर्यः फूलचन्द्रशास्त्रीजखौरा कुशलाध्यापकः अनुवादकः लेखकश्च इत्येवंरूपेण सुविख्यातः आसीत्। उत्तरप्रदेशप्रान्तस्य ललितपुरमण्डले सिरगनग्रामे पौषशुक्लनवमी तिथौ सं.१९६७ तमे वर्षे प्राप्तजन्माऽयं श्रीगोपालदासबरैया इति महतो ख्यातनामविदुषः शिष्यः आसीत् तत्रत्य मुरैनास्थिते श्रीगोपालदास दि.जैन विद्यालये शास्त्रीपरीक्षा–मधीत्य जैनसिद्धान्तानां सम्यग्वेत्ता भवान् संस्थितः।

बीनानगरस्थिते विद्यालये कार्यं कुर्वता भवता जिनाष्टकावलिस्तोत्रकाव्यं[३१] लिखितम्। स्वीयग्रामे एव सेवानिवृत्यनन्तरं समाधिपूर्वकं देहत्यागो साधितः।

□□□

[३१]. विशेषविवेचनंचतुर्थाध्याये स्तोत्रकाव्यप्रविभागे द्रष्टव्यम्।

## १२.पं.गोपालदास बरैया

(१८६७-१९१७)

मुरैनानगरे श्रीगोपालजैनसिद्धान्तमहाविद्यालयस्य संस्थापकत्वेन, नैकानां विदुषां निर्माणे मूलभूतकारणस्वरूपस्य भवतः ख्यातिः जैनविद्वज्जनेषु चिरस्थायिनी वर्तते। लक्ष्मणदास इति भवतः पितुः नामधेयमम्। आगरानगरे प्राप्तजन्माऽयं माध्यमिकशिक्षापरिमितमध्ययनं विधाय पण्डितवर्येण जनसामान्यस्य सेवार्थं मुरैना-मुंबई- अजमेर-शोलापुरनगरेषु उद्योगः प्रकर्षेण उद्योगश्च साधितः। मुम्बापुर्यां महोदयेन स्वीयसमाजिकसेवाकार्यम् आरब्धं तथा तत्रैव दिगम्बरजैनसभायाः १८९२ तमे वर्षे स्थापना कृता। अनन्तरवर्तिनि काले १८९९ तमे वर्षे जैनमित्र इत्यस्याः पत्रिकायाः आरम्भः सभामाध्यमेन कृतः। पत्रिकामाध्यमेन पं.गोपालदासबरैया सर्वसामान्यजनेषु परिचितो जातः। तत्कालीनग्वालियरराज्ये भवान् मॅजिस्ट्रेट पदे मुरैनानगरे नियुक्तः आसीत्। भवान् स्वयंप्रेरणया संस्कृतं जैनदर्शनं च अधीतवान् तथा विद्वज्जनेषु गौरवभूतं स्थाने प्रतिष्ठितः। स्याद्वादवारिधिः, वादिगजकेशरी, न्यायवाचस्पतिः इत्यादिभिः बिरुदैः भवान् समाजे सम्मानमवाप।

पं.गोपालदासबरैया अप्रतिमवक्तारूपेण परिचितो जातः। जैनसिद्धान्तः इति विषये भवतो भाषणानि सर्वप्रसिद्धानि। जैनसिद्धान्तदर्पणः, जैनसिद्धान्तप्रवेशिका चेति भवदीयकृती वर्तेते।

□□□

## १३.पं.फूलचन्द्र सिद्धान्तशास्त्री

(१९०१-१९९१)

विंशशतकस्थजैनविद्वज्जनेषु पं.फूलचन्द्रसिद्धान्तशास्त्रिवर्यः, पं.जगन्मोहनलालशास्त्रिवर्यः, कैलासचन्द्र-सिद्धान्तशास्त्रिवर्यश्च जैनसिद्धान्तवित्सु जैनसंस्कृतकृतिरचयितृषु रत्नत्रयिरूपेण महत्त्वं धारयन्ति। तत्र प्रधानरत्नरूपेण पं.फूलचन्द्र सिद्धान्तशास्त्रिवर्यस्य स्थानम्।

११ एप्रिल १९०१ तमे वर्षे उत्तरप्रदेशस्य झांसीमण्डले सिलावनग्रामे भवतः जन्म सञ्जातम्। दरयालालजानकीबाईभ्यां पितृभ्यां सुलालितः भवान् जैनसिद्धान्तसाहित्यक्षेत्रं सुचारुरूपेण लालयति संवर्धयतीति चेत्यत्र नास्ति स्वल्पीयसी अपि विप्रतिपत्तिः।

इन्दौरनगरस्थिते हुकुमचन्दिगम्बरजैनसंस्कृतविद्यालये, साढूमलस्थिते जैनसंस्कृतविद्यालये, मुरैनास्थिते च गोपालदासजैन संस्कृतविद्यालये अध्ययनं कृत्वा भवद्भिः शास्त्रीति उपाधिः प्राप्ता। तथाच, साढूमलविद्यालये, स्याद्वादमहाविद्यालये, नाभिनन्दनजैनविद्यायलये(बीनास्थिते) अध्यापनकार्यं कृतम्। ततः परं महाराष्ट्रस्य सोलापुरमण्डले नातेपुतेनगरे षड्वर्षाणि स्थित्वा साहित्याध्ययने निमग्नः सञ्जातः। १९३७ तः १९४० पर्यन्तं यावत् डॉ.हीरालाल पण्डितवर्येण साकं अमरावतीनगरे स्थितम्। ततः बीनानगरे पुनः प्रस्थितम्।

भवतां सानुवादं सम्पादितानां पञ्चदशग्रन्थानां सूचिः निम्नरूपेण वर्तते।- १.प्रमेयरत्नमाला, २.आलापपद्धतिः, ३.षट्खण्डागमस्य सानुवादं सहसम्पादनं, ४.महाबन्धस्य (२-७)सम्पादनं, ५.सप्ततिकाप्रकरणं, ६.तत्त्वार्थसूत्रं, ७.श्रीकानजीस्वामी अभिनन्दनग्रन्थः, ८.सम्यग्ज्ञानदीपिका, ९. ज्ञानपीठपूजाञ्जलिः, १०.कलशभावार्थेन सह समयसारस्य सम्पादनं, ११.सर्वार्थसिद्धिः, १२.लब्धिसारक्षपणासारः १३.ज्ञानसमुच्चयसारः १४.आत्मानुशासनम् १५.कषायपाहुड(भागाः-१-१६) ।

□□□

## १४.पं.बालचन्द्र सिद्धान्तशास्त्री

(१९०५-१९८६)

बुन्देलखण्डप्रान्तस्य ललितपुरमण्डले सोरई इति अविकसितप्रदेशस्थिते ग्रामे पं.बालचन्द्रसिद्धान्तशास्त्रिवर्यस्य जन्म सं.१९६२ तमे वर्षे जातः। द्वादशवर्षदेशीयस्य भवतः मातापितरौ अल्पायुषि एव दिवंगतौ। १९२१ तः १९२८ पर्यन्तं स्याद्वादमहाविद्यालये न्यायतीर्थः, न्यायमध्यमा, धर्मशास्त्री इत्यादि नव्यन्यायविषयिन्यः परीक्षाः उत्तीर्णीकृताः। तदानीं तत्कालीनप्राचीनन्यायविदुषः पं. अम्बादास वर्यस्य मार्गदर्शनं भवता लब्धम्। पं.वंशीधर व्याकरणाचार्यः भवतो पितुर्भ्राता तथैव पं.दरबारीलालकोठिया न्यायाचार्यमहोदयः भवतो भ्राता आसीत्।

भवद्भिः रामचन्द्रविरचितस्य पुण्यास्रवकथाकोशस्य, गुणभद्राचार्यविरचितस्य आत्मानुशासनस्य, आचार्यभास्करनन्दिनः ध्यानशतकस्य च शोधनपुरस्सरं सम्पादनं कृतम्। पद्मनन्दिपञ्चविंशतिका ग्रन्थस्य संस्कृतटीकया साकं सम्पादनं चापि भवता विहितम्।

□□□

## १५.महाकवि पं.के.भूजबली शास्त्री

(११ फेब्रुवारी, १८९७)

दक्षिणभारते द्राविडभाषिकप्रान्ते मैसूरराज्ये काशिपट्टण ग्रामे ११ फेब्रुवारी, १८९७ तमे वर्षे प्राप्तजन्माऽयं भारतीयधर्म–साहित्य–इतिहास–पुरातत्त्वादिविषयेषु समग्रवेत्तारूपेण ख्यातिमवाप। आग्लभाषायां प्राथमिकीं शिक्षामवाप्य संस्कृतपठनार्थं नेल्लिकारग्रामे संस्कृतपाठशालायां प्रविष्टः। ततः १९१६ तमे वर्षे मैसूरनगरे सेठवर्धमानैय्यामहोदयेन संचालितायां संस्कृतपाठशालायां प्रविष्टः। १९२१ तमे वर्षे मुरैनानगरे स्थिते श्रीगोपालदासजैनविद्यालये शास्त्रीपरीक्षा उत्तीर्णीकृता। अत्रैव न्यायाचार्यपरीक्षादिपूर्वकम् न्यायाचार्य–न्यायकुलभूषणादि–उपाधयः अधिगताः। आरानगरे पं.ब्र.चन्दाबाईबालाविश्रामालये संस्कृतस्य न्यायस्य च कक्षाः आरब्धाः। १९४४ तमे वर्षे पुनः मूडबद्री समागत्य भारतीयज्ञानपीठस्य कन्नडशाखायां अध्यक्षरूपेण कार्यमपश्यत्। १९६३ तमे वर्षे बिहारराज्यस्य राज्यपालमहोदयेन अय्यंगारमहोदयेन भवान् सिद्धान्ताचार्यपदेन विभूषीकृतः। संस्कृतभाषीयकाव्यत्रिकस्य मुनिसुव्रतमहाकाव्यस्य चित्रसेनपद्मावतीचरितस्य, भव्यानन्दस्य च सानुवादं सम्पादनं विहितम्। संस्कृतभाषायां मौलिककृतयः[३२] १.आत्मनिवेदनम्, २.शान्ति – शृङ्गारविलासः, ३.भुजबलिचरितं चेति तिस्रः वर्तन्ते। ज्ञानकोषः, ज्ञानप्रदीपिका, बृहत्समाधिमरणं, क्षत्रचूडामणिः इत्यादिप्रमुखग्रन्थानां हिन्दीप्रस्तावनया सह प्रकाशनं कृतम्। मुहूर्तदर्पणः कृतिरियं भवद्भिः हिन्द्यां अनूदिता। संस्कृतकन्नडहिन्दीभाषासु प्रायशः चत्वारिंशग्रन्थानां सम्पादनं भवता विहितमिति महती सेवा साहित्यस्य भवता विहितेति गौरवाय समेषाम्।

□□□

[३२].विशेषविवेचनं चतुर्थाध्यायस्य साहित्यसम्बद्धविभागे द्रष्टव्यम्।

## १६.पं.लालाराम शास्त्री

(१८८६-१९६०)

विंशशतकस्य विशिष्टविदुषां कविमनीषिणां च प्रथमपङ्क्तौ पं.श्रीलालारामशास्त्री महोदयानां स्थानम्। उत्तरप्रदेशस्य आगरामण्डले चावलीग्रामे प्राप्तजन्माऽयं पण्डितवर्यः वृत्त्या परोपकारी, अनुभवी च यद्यपि वैद्यः अपि आसीत् तथापि कालान्तरे वणिग्वृत्यर्थं मेनपुरी नगरं प्रति स्थलान्तरितः आसीत्। षट्सु भ्रातृषु भवान् तृतीयः पञ्चमश्च भ्राता पं.मक्खनलालशास्त्री आसीदिति भवतां परिवारे सरस्वत्याः नित्यप्रवाहमानो भवतीति निर्विवादम्। भवतो भाषणानि, प्रवचनानि च धारावाहिततया भवन्ति स्म। भवद्भिः नैकानां संस्कृतग्रन्थानां टीकालेखनं अनुवादपूर्वकं सम्पादनं च कृतमिति तद्विषयिनी भवतां महती ख्यातिरजायत। भारतवर्षीयदिगम्बरजैनसभया भवान् धर्मरत्नमिति उपाधिना सभाजितः। १९६० तमे वर्षे ७४ वर्षाणि आयुर्धारी भवान् दिवंगतः।

भवद्भिः सानुवादं, सटीकं सम्पादितानां संस्कृतग्रन्थानां[३३] सूचिः बृहत्तमा वर्तते इति विंशशतकस्य संस्कृतसाहित्यसंवर्धने भवताममूल्यं योगदानं वर्तत इति ज्ञातं भवति। आदिपुराणं, उत्तरपुराणं, शान्तिपुराणं, धर्मामृतश्रावकाचारः, प्रबोधसारः, चारित्रसारः, आचारसारः, धर्मप्रश्नोत्तरं, जिनशतकं, पात्रकेशरीस्तोत्रं, संशयिवदनविदारणं, गौतमचरितं, सुक्तिमुक्तावली, तत्त्वानुशासनं, वैराग्यमणिमाला, द्वादशानुप्रेक्षा, दशलाक्षणिकजयमालः, बृहत्स्वयम्भूस्तोत्रं, लघीयस्त्रयः, सुभौमचरितं, चतुर्विंशतिसन्धानकाव्यं, चतुर्विंशतितीर्थकरमहास्तुतिः, चतुर्विंशतिस्तोत्रं, सुधर्मध्यानप्रदीपः, सुधर्मश्रावकाचारः, बोधामृतसारः, मुनिधर्मप्रदीपः, सुधर्मोपदेशामृतं, दशभक्तिः इत्येताः पुरातनकालादारभ्य प्रायः सर्वाः अर्वाचीनरचनाः अपि स्वीयलेखिन्याः आमूलं स्पृष्टाः।

□□□

[३३].विशेषविवेचनं पष्ठाध्याये द्रष्टव्यम्।

## १७.पं.दयाचन्द्र सिद्धान्तशास्त्री

(जन्मवर्षं–१९१५)

मध्यप्रदेशप्रान्तस्य सागरमण्डले शाहपुरनाम्नि ग्रामे अनन्यसमाजसेवकस्य पं.दयाचन्द्रसाहित्याचार्यवर्यस्य जनिः ११ अगस्ट, १९१५ तमे वर्षे जाता। पितुःनाम श्रीभगवानदासः मातुश्च नामधेयं भागवतीबाई इति आसीत्। प्राथमिकीं शिक्षां परिसमाप्य चतुर्दशवर्षीये अल्पायुषि बाल्यकाले धर्म–साहित्य–व्याकरण–न्यायविशारद् तथा शास्त्रीकक्षाः उत्तमाङ्कैः समुत्तीर्णीकृताः। विविधासु संस्थासु प्राध्यापकरूपेण कार्यं कृतम्। ७६तमे वर्षे जैनपूजाकाव्यानि इत्यस्मिन् विषये भवद्भिः डॉ.भागचन्द जैन भागेन्दु महोदयानां निर्देशने संशोधनकार्यं कृतम्। भवतां सरस्वतीवन्दनाष्टकम्[३४] लघुकाव्यं जनानां विद्यां प्रति चित्तानि नूनम् आवर्जयति।

□□□

[३४].विशेपविवेचनं चतुर्थाध्याये द्रष्टव्यम्।

## १८.पं.चैनसुखदासः न्यायतीर्थः

(२२ जानेवरी१९००-२६जानेवारी१९६९)

राजस्थानप्रान्तस्य वीरभुवि नैकाणां प्रतिभावतां कविमनीषिणां जनिः समजायत। महाकविः आशाधरः, महाकविः माघः, भट्टारकशिरोमणिः पद्मनन्दिः, भट्टारकसकलकीर्तिः, महाकविः जिनदासः, आचार्यहरिभद्रसूरिः, पं.टोडरमलः, पं.दौलतरामः, पं.जयचन्द छाबडा, महाकविःआचार्यज्ञानसागरः, मुनिश्रीजिनविजयश्चेते तपस्विनः कविमनीषिणश्च राजस्थानप्रान्तभुवमलङ्करयामासुः।

पं.चैनसुखदासः न्यायतीर्थः पण्डितप्रवरेष्वन्यतमत्वेन गण्यते। जैनसमाजस्य ते शिरोमणिरूपेण सर्वविधकार्याणि समर्पणेन कृतवन्तः। श्रद्धेयपण्डितप्रवरस्य जन्म २२ जानेवरी १९०० तमे वर्षे जयपुरमण्डले भादवा ग्रामे जातः। जन्मतः एव अद्वितीयातिशायिनी बुद्धिः, यशः, प्रभावश्च भवतः जन्मकुण्डलिन्यामेव उल्लिखितः आसीत्। दशवर्षीयाल्पायुषिकाले एव पितुः देहावसानेन परिवारस्य आर्थिकी स्थितिः अतीव विकलतामुपागता। तथास्थितौ मात्रा वस्त्रनिर्माणादीनि कार्याणि अपि कृत्वा परिवारस्य बालकस्य चैनसुखदासस्य आवश्यकताः प्रपूरिता आसन्।

प्रारम्भिकी शिक्षा भादवा ग्रामे पूरयित्वा उच्चशिक्षार्थं स्याद्वादमहाविद्यालये वाराणसीं प्रति प्रस्थितः। तार्किकप्रतिभावैलक्षण्यकारणात् मित्रेषु अस्य परिचयः तर्कचन्द्र इति रूपेण आसीत्। स्याद्वादमहाविद्यालये अध्ययनानन्तरं बङ्गालसंस्कृत एसोसियेशन संस्थातः न्यायतीर्थपरीक्षां सर्वोत्तमाङ्कैः प्राप्य न्यायतीर्थः इति उपाधिना शोभाभाक् सञ्जातः। राजकीयसंस्कृतमहाविद्यालयः वाराणसीतः आचार्यपरीक्षाम् उत्तीर्णीचकार। अनेन पण्डितप्रवरेण स्याद्वादमहाविद्यालये अध्ययनावसरे सहपाठिमित्रगणेषु पं.कैलासचन्द्रशास्त्री, इन्दौरनिवासी

पं.जीवन्धरजी, पं.दरबारीलालः, पं.भूरामलशास्त्री(महाकविःआचार्यज्ञानसागरः) इत्यादिषु स्वीयं प्रभाविपाण्डित्यम् उपस्थापितमासीत्।

पं.चैनसुखदासमहोदयः ३० अक्टोबर १९३१ तमे वर्षे जयपुरनगरस्थितायाः दिगम्बरजैनमहापाठशालायाः अध्यक्षपदे (प्राचार्यपदे) नियुक्तः। प्रण्डितप्रवरेण अधीतविद्यायाः दानं जीवनीयसकलद्वारेभ्यः कृतम् तेषां व्यक्तित्वं नाम नारिकेलफलमिव अन्तस्तात् मधुरं कोमलं बहिस्ताच्च कठिनमासीत्। स्वीयजीवनकाले पण्डितप्रवरस्य शिष्यगणेषु स्व.प्रकाशन्यायतीर्थः, पं.कैलासचन्द्रशास्त्री(अनुजः), स्व.पं.भवरलालन्यायतीर्थः, स्व.पं.मिलापचन्दन्यायतीर्थः, स्व. डॉ.कस्तुरचन्दकासलीवालः, कवि अनूपचन्दन्यायतीर्थः, सुरज्ञानीचन्दन्यायतीर्थः, पं. चिरंजीलालः जैनदर्शनाचार्यः, पं.गुलाबचन्द्रजैनदर्शनाचार्यः, वैद्यश्रीप्रभु –दयालकासलीवालः, वैद्यश्री.सुशीलकुमारः, वैद्यश्री फूलचन्द्र जैनः, प्रो.महादेवधनुष्करः, डॉ.प्रेमचन्द्र रांवका इत्यादयः विख्याताः सन्ति।

सरस्वत्याः वरदहस्तरूपेण पण्डितप्रवराणां परिचयः इति कृत्वा विंशशतककीयसंस्कृतसाहित्यस्य अभिवर्धने पण्डितप्रवराणां महद्योगदानं वर्तते। महोदयानां संस्कृतमौलिकरचनासु – १.जैनदर्शनसारः [३५] (दर्शनग्रन्थः), २.पावनप्रवाहः [३६], ३.सर्वार्थसिद्धिसारः [३७] (दर्शनग्रन्थः), ४.भावनाविवेकः [३८], ५.प्रवचनप्रकाशः [३९] इत्येताः रचनाः प्रमुखाः वर्तन्ते।

□□□

[३५]. प्रवन्धस्य चतुर्थाध्याये मौलिककृतिपु दर्शनाधृतसाहित्यविभागे विशेपविवेचनं द्रष्टव्यम्।
[36] .चतुर्थाध्याये मौलिककृतिपु मुक्तककाव्यविभागे विशेपविवेचनं द्रष्टव्यम्।
[37] चतुर्थाध्याये मौलिककृतिपु दर्शनाधृतसाहित्यविभागे विशेपविवेचनं द्रष्टव्यम्।
[38] तत्रैव।
[39] चतुर्थाध्याये मौलिककृतिपु मुक्तककाव्यविभागे विशेपविवेचनं द्रष्टव्यम्।

## १९.डॉ.श्रेयांसकुमारः सिंघई

(अगस्ट,१९५८)

मध्यप्रदेशप्रान्तस्य सागरमण्डले खुरई ग्रामे २१.०८.१९५८ तमे वर्षे प्राप्तजन्माऽयं पं.श्रीश्रेयांसकुमारसिंघईवर्यः राजस्थानप्रान्तस्य जयपुरनगरे जैनदर्शनमधिकृत्य आचार्यपरीक्षां समुत्तीर्य जैनवाङ्मयस्य सेवायां निरतो जातः। तथाच, जयपुरनगरस्थिते श्रीदिगंबरजैनआचार्यसंस्कृतमहाविद्यालये २७/०२/१९८४ तः आरभ्य ०२/०८/१९८७ यावद् व्याख्यातारूपेण सेवाकार्यमकरोत्। ०३/०८/१९८७ तः आरभ्य अद्ययावत्पर्यन्तं भवान् राष्ट्रियसंस्कृतसंस्थानस्य जयपुरपरिसरे जैनदर्शनविभागे विभागप्रमुखरूपेण कार्यं कुर्वाणः नवनवोन्मेषशालितया जैनवाङ्मयनिर्माणे तत्परो दृश्यते।

भवद्भिः जैनदर्शने मुक्तिमार्गः, जैनकर्मसिद्धान्ते बन्धमुक्तिविमर्शः इति ग्रन्थद्वयं [४०] मौलिकरूपेण संस्कृतभाषायां लिखितम्। श्रावकधर्मसोपानमिति धर्मशास्त्रविषयको ग्रन्थः, समणसुत्तस्य प्राकृतग्रन्थस्य श्रमणसंस्कृतव्याख्या चेति ग्रन्थद्वयं प्रकाशनाधीनं वर्तते। पं.देवीदासकृतस्य प्रवचनसारभाषाकवित्वस्य संस्कृतव्याख्यानकार्यस्य सानुवादं [४१] सम्पादनं तत्रभवद्भिः विहितमिति जैनदार्शनिकसंस्कृतवाङ्मयसंवर्धने भवतां सर्वविधं योगदानं समर्पणं च द्योतितं भवति।

□□□

[४०].चतुर्थाध्याये विशेपविवेचनं द्रष्टव्यम्।
[४१].पष्ठाध्यायस्य अनूदितग्रन्थविभागे विशेपविवेचनं द्रष्टव्यम्।

## चतुर्थोऽध्यायः– विभिन्नसंस्कृतशाखासु मौलिकवाङ्मयस्य योगदानम्।

### संस्कृतसाहित्यं तद्योगदानञ्च ।

सहिततायाः भावः साहित्यमिति साहित्यपदस्य सामान्योऽर्थः। आचार्यराजशेखरः साहित्यशास्त्रं पञ्चमीविद्यारूपेण स्वीयकाव्यमीमांसाग्रन्थे प्रतिपादयति। काव्यं तत्र चतुर्विधविद्यास्थानेभ्यः अपरं पञ्चदशसंख्याकं विद्यास्थानरूपेण प्रतिष्ठितमिति साहित्यशास्त्रस्य काव्यस्य च शास्त्रपरम्परायां महत्त्वपूर्णं स्थानं पूराकालादेव वर्तते। साहित्यशास्त्रं काव्यशास्त्रं अलङ्कारशास्त्रं, पुराकल्पविद्या इत्यादीनि साहित्यशास्त्रपदस्य पर्यायवाचकानि पदानि। समस्तवाङ्मयं लक्षणलक्ष्यरूपेण द्विधा विभक्तं भवति। साहित्यशास्त्रीयग्रन्थाः लक्षणग्रन्थरूपेण परिचीयन्ते तत्रैव साहित्यशास्त्राधारेण विनिर्मिताः अखिलकाव्यसम्बद्धा सर्वेऽपि ग्रन्थाः लक्ष्यग्रन्थेषु परिगण्यन्ते। एवं लक्ष्यलक्षणरचनारूपं साहित्यमिदं अस्मान् पशुभ्यः पृथक्कारकं मानवपदे व्यवस्थापयति इति संस्कृतनीतिकारेण –

साहित्यसंगीतकलाविहीनः, साक्षात्पशुपृच्छविषाणहीनः। तृणं न खादन्नपि जीवमानः, तद्भागधेयं परमं पशूनाम्।। अप्येवं व्यवस्थापितम्।

काव्यं पदं संस्कृतभाषायाः कव्लृ धातोः निष्पद्यते। कवेः कर्म काव्यं भवति। कवयतीति कविरिति साधारणनिष्पत्त्या कविः स्वच्छन्दरीत्या स्वात्मस्थितान् परात्मस्थितान् वा भावान् मौखिकरीत्या, लिखितरीत्या, चित्रसंकेतादिभिर्वा अभिव्यनक्ति अतः सः कविरिति संज्ञाभाग् भवति। तादृशस्य कवेः यत्कर्म भवति तत्काव्यसंज्ञां लभते इति काव्यपदस्य सामान्यार्थः। कविराजशेखरेण काव्यपुरुषस्य वर्णनावसरे काव्यस्यात्मा रसः, शब्दार्थौ शरीरं, उपमाश्लेषादयः अलङ्काराः, माधुर्यओजःप्रसादादयः गुणाः भवन्तीति प्रतिपादितम्। आचार्यमम्मटकृतं

काव्यलक्षणं[१] – 'तददोषौ शब्दार्थौ सगुणावनलङ्कृतीः पुनः क्वापि' प्रकृतमतमिदं सर्वात्मतया पुष्टीकरोति।

साधारणतया दृश्यश्रव्यभेदेन काव्यं द्विविधं भवति। तत्र श्रव्यकाव्यस्य त्रीषु प्रबन्धकाव्य-मुक्तककाव्य-चम्पूकाव्येषु प्रमुखभेदेषु प्रबन्धकाव्ये महाकाव्यानां खण्डकाव्यानां च अन्तर्भावो भवति। जैनपुराणे आचार्यजिनसेनकृतं काव्यसामान्यलक्षणं निम्नरूपेण वर्तते-

कवेर्भावोऽथवा कर्म काव्यं तज्ज्ञैर्निरूच्यते।
तत्प्रतीतार्थमग्राम्यं सालङ्कारमनाकुलम्।।[२]

तत्रादौ जैनपरम्परायां महाकाव्यमवलोकयामः।

## १. महाकाव्यम्-

प्राचीनसाहित्यशास्त्रीयाचार्यदण्डिनः काव्यादर्शानुसारं तथा कविराजविश्वनाथस्य साहित्यदर्पणानुसारं – महाकाव्यं पदं महच्च काव्यं चेति पदद्वयेन विनिर्मितं वर्तते। महाकाव्यं सर्गेषु निबद्धं भवति। महाकाव्यस्य कथावस्तु प्राचीनाख्यानाधृतं, पौराणिकं वा भवति। नायकः उदात्तस्वभावी भवति चरित्रवान् भवति। महाकाव्यारभः आशीर्वादात्मक-वस्तुनिर्देशात्मक-नमस्कारात्मकमङ्गलाचरणेभ्यः एकतरेण मङ्गलाचरणेन भवति। महाकाव्यं अतिलघु अपि न भवितुं शक्नोति। महाकाव्ये न्यूनातिन्यूनतया अष्टौ सर्गाः अपेक्षन्ते। सर्गाः अपि अतिलघुः अतिदीर्घतराः न भवन्ति। सर्गेषु पद्यानां वृत्तं समानं भवति परं, अन्तिमपद्यं सर्गीयपद्यानां वृत्ताद्भिन्नवृत्तं भवति, अग्रिमसर्गे भविष्यमानानां घटनानां अस्पष्टसूचकं च भवति।

महाकाव्ये नगरसमुद्रपर्वतऋतुसर्योदयचन्द्रोदयजलक्रीडा-उद्यानविहार-विवाह-यात्रा-युद्ध-विजयप्राप्त्यादिघटनानां विवेचनं स्थाने स्थाने भवति। महाकाव्यस्य प्रधानरसः शृंगारवीरशान्तेभ्यः

[१]. का.प्र.१.३
[२] .आ.पु.१.९४

कश्चिद् एकः महाकाव्यस्य अङ्गीभूतो रसः भवति। अन्ये रसाः अङ्गभूताः संभूय अङ्गीभूतं परिपोषयन्ति।

वैदिकसनातनपरम्परायां वेदब्राह्मणारण्यकोपनिषद्पुराणादीनि यथा महाकाव्यानां भूमयः भवन्ति। तथा जैनमहाकाव्यपरम्परायां मुख्यतया द्वादशाङ्गवन्ति जिनशास्त्राणि, जैनपुराणानि च महाकाव्यानां आधारभूमयः अवतिष्ठन्ते। द्विविधसम्प्रदायेष्वपि संस्कृतपुराणानां विविधाः रचनाः सञ्जाताः। पुराणकथानां धर्मेण साकं, दर्शनसिद्धान्तैश्च साकं नितरां सामीप्यसम्बन्धो भवति अतः काल्पनिककथाद्यपेक्षया एतादृशकथानां शास्त्रप्रसिद्धत्वात् काव्ये महाकाव्ये च सत्यभूतं प्रामाणिकं च स्थानं भवति।

जैनसंस्कृतपुराणान्यपि सर्वविधपुराणलक्षणैः समन्वितानि भूत्वापि महाकाव्यघटकैः नितरां सुपरिचितानि सन्ति। विन्टरनित्ज पाश्चात्यमतवादिनः मतानुसारं पुराकालादारभ्य दिगंबरसम्प्रदाये महाकाव्यानि पुराण संज्ञया अभिधीयन्ते स्म; श्वेताम्बरसम्प्रदाये च चरितमिति संज्ञया अभिधीयन्ते स्म।। आचार्यहेमचन्द्रकृतं त्रिषष्टिशलाकापुरुषचरितम् इत्येतच्चरित्रग्रन्थः महाकाव्यरूपेण अद्यापि अङ्गीक्रियते। निष्कर्षतः, पौराणिकशैल्यां लिखितानामेतेषां जैनपुराणमहाकाव्यानां जैनसंस्कृतौ विकसनशील-महाकाव्यानि इत्यभिधानं कर्तुंयोग्यं भवति। किञ्च, विकसनशीलमहाकाव्येभ्यः पुराणेभ्यः कथानकम् अङ्गीकृत्य निःशेषं अलङ्कारशास्त्रनियमानुगुणं यानि महाकाव्यानि- द्विसन्धानमहाकाव्यं, जयोदयवीरोदयादीनि महाकाव्यानि विरचितानि सन्ति तानि विकसितस्वरूपाणि जैनमहाकाव्यानि विज्ञेयानि भवन्ति।

अत्रप्रस्तुतक्रमे विंशशतके विरचितानि महाकाव्यानि पर्यालोचनीयानि भवन्ति तदवलोकयामः।-

## १.जयोदयमहाकाव्यम्–

महाकाव्यमिदं जैनाचार्यजिनसेनविरचितस्य नवमशतकस्य आदिपुराणकथां आधृत्य विरचितम्। गृहस्थदशायां वाणीभूषणपं. भूरामल शास्त्री [३] इत्येवंनामधारिणा आचार्यज्ञानसागरमहा–कविनेदं विरचितं वर्तते। संस्कृतसाहित्ये श्रीहर्षकविना विरचितस्य बृहत्कायस्य नैषधीयचरितस्य नूनं स्मरणमनेन महाकाव्याध्ययनेन भवति। अस्य युगस्य प्रथमतीर्थकरस्य भगवतो वृषभदेवस्य ज्येष्ठपुत्रस्य भरतचक्रवर्तिनः सेनापतेः जयकुमार इत्याख्यस्य काव्यनायकभूतस्य सरसजीवनकथानकं अस्य काव्यस्य प्रमुखो विषयः। काव्येऽस्मिन् जयकुमारसुलोचनयोः प्रणयकथावर्णनं श्रीहर्षेण नैषधीयचरिते वर्णितस्य विषयवस्तुनः महाकविकालिदासस्य च काव्यशैल्याः स्मारणं कारयति। माघविरचितस्य शिशुपालवधस्य काव्येन समं काव्येऽस्मिन्नपि कथानकेनसाकं दार्शनिकतत्त्वानां सिद्धान्तानां च बहुत्र समावेशनं कृतं दृश्यते अतः माघकवेः काव्येन समं विंशशतके विरचितमिदम् अभूतपूर्व महाकाव्यम् इत्ययं निर्विवादितो विषयः।

महाकाव्यमिदं २८ सर्गात्मकम्। ३०४७ परिमितानि पद्यानि चास्मिन् विद्यन्ते। शृङ्गारः शान्तरसश्च समानरूपेणात्र प्रवहमानौ दृश्येते। महाकाव्यस्यास्य आधृतरूपं यद्यपि साहित्यिकं वर्तते तथापि गन्तव्यं तु दर्शनभूतं अहिंसा, सत्यं, अचौर्यं अपरिग्रहः, ब्रह्मचर्यमित्यादिकं तत्त्वमेव वर्तते। रस– अलङ्कारादीनि तत्त्वानि महासागरे जलमिव काव्येऽस्मिन्नगाधरूपेण प्रसृतानि वर्तन्ते।

[३].कवेः विस्तरेण परिचयः द्वितीयाध्याये द्रष्टव्यः।

**२.वीरोदयमहाकाव्यम्–**

महाकाव्यमिदमपि गृहस्थदशायां पं.भूरामल शास्त्री इत्येवंनामधारिणा आचार्यज्ञानसागरमहाकविना विरचितम्। चतुर्विंशतमस्य तीर्थकरस्य भगवतो महावीरस्य वीर इत्यपरनामानुसारं महाकाव्यस्यास्य वीरोदयमहाकाव्यमिति नामकरणं विहितम्। वीरस्य महावीरस्य उदयः माहात्म्यमिति वीरोदयमहाकाव्यं पर्यवस्यते। भगवतो महावीरस्य साङ्गोपाङ्गं जीवनकथानकमस्मिन् महाकाव्ये साहित्यशैल्यामुपवर्णितं वर्तते। काव्येऽस्मिन् द्वाविंशतिसर्गाः, ९९४ पद्यानि चाहत्येदमपि महाकवेरिदमप्येकं महाकाव्यं आधुनिक्यां शैल्यां लिखितं वर्तते। अस्य प्रथमषट्सर्गानां संस्कृतटीका समेषां च सर्गाणां हिन्दीटीका स्वोपज्ञरूपेण महाकविना विरचिता वर्तते। शान्तरसः प्रधानो रसः। रीतिः वैदर्भी, अलङ्काराश्च प्राधान्येन अर्थालङ्काराः उपमादयः प्रयुक्ता दृश्यन्ते। महाकाव्यमिदं जयोदयमहाकाव्यस्य अनुजरूपं महाकाव्यम् स्वीक्रियते।

काव्येऽस्मिन् साहित्यदर्पणे विश्वनाथोक्तानां सर्वेषां महाकाव्यघटकानां समावेशनं यद्यपि विद्यते ततोऽप्यपरं कानिचन विशेषतथ्यानि अपि अस्य महाकाव्यस्य शोभावहानि सन्ति। भगवतो महावीरस्य जन्मनः पूर्वं देशे धार्मिकस्थितेः सामाजिकस्थितेश्च यथास्थितिवर्णनमत्र कविना कृतं वर्तते। भारतदेशे देशस्य, नगराणां, ग्रामाणां किंप्रकारिणी स्थितिरासीत् तत्रत्य मार्गाः, आपणम् इत्यादीनां मनोरमवर्णनं प्रथमे सर्गे[४] विहितं दृश्यते। षष्ठसर्गे महाकविः मातुः त्रिशलादेव्याः गर्भस्थितिवर्णनेन साकं वसन्तर्तोः अद्वितीयप्रकारकं वर्णनं करोति येन सामाजिकानां पठनमात्रेण एव वसन्तस्य ऋतुराजस्य सम्प्रत्ययो भवति। सप्तमसर्गे जन्ममहोत्सव(जन्मकल्याणक)वर्णनं महता विद्वत्तया कविना उपवर्णितं वर्तते। अष्टमसर्गे बालक्रीडादीनां वर्णनम्, दशमसर्गे भगवतो वीरस्य अन्तर्मनस्स्थितानां भावनानां रोचकवर्णनं,

---

[४]. वीरो.१.३०-३९

एकादशे सर्गे वीरबालकः अवधिज्ञानबलात् पूर्वकालिकजन्मनां स्वयमवलोकनं करोति तदनुरूपं कविना वीरस्य अवलोकितपूर्वभवानां वर्णनं, द्वादशतमे सर्गे कैवल्यप्राप्तिः, त्रयोदशे समवशरणशोभावर्णनं ज्ञानकल्याणकमहोत्सववर्णनं च, पञ्चदशे सर्गे उपदेशसभायां भगवतो महावीरस्य वचनततिः कथं सर्वजनानुकूला मागध्यादिभाषारूपिणी परिवर्तिता भवति स्मेति वर्णनं पाठकान् अद्भुतरसस्य चरमानुभूति –मनुभावयति।

षोडशे सर्गे अहिंसासाम्यवादयोः विवेचनं, मानवतायाश्च व्याख्यानं कविना अतीव रोचकविधिना कृतं दृश्यते। अष्टादशे सर्गे वैदिकपरम्परायाः विद्यमानायाः कालव्यवस्थायाः जैनकालव्यवस्थया अवसर्पिण्युत्सर्पिणीभ्यां साकं समन्वयनं कृत्वा कलियुगरूपस्यास्य पञ्चमावसर्पिणीकालस्य बोधो सामाजिकानां कृते काव्यविधिना कारितः। एकोणविशतमे सर्गे महाकविः अतीव सरलसुगमविधिभ्यां अनेकान्तवाद–स्याद्वाद–सप्तभङ्गीनयव्यवस्थानां निरूपणं विदधाति। जगत्सारभूतं द्रव्यनिरूपणं च विदधाति। विंशसर्गे कविः सर्वेभ्यः उपरतानां सिद्धपुरुषाणां सिद्धपरमेष्ठिनां वर्णनं तेषांच अतीन्द्रियानन्तसौख्य–वीर्य–ज्ञान–दर्शनादीनां वर्णनेन सामाजिकानामपि तद्भावभावित्वं सम्पादने न कश्चिद्बाधोऽवतिष्ठते तथा कविः सिद्धदशायाः वर्णनं करोति।

एकविंशसर्गे शरदृतोः साहित्यिकशैल्याः वर्णनं विधाय आन्तर्मनाश्रीमतोः महावीरस्य मुक्तिप्राप्तदशायाः सिद्धपुरुषत्वसिद्धेः वर्णनं कविना तथैव कृतं भाति यथा एषः तत्रैव विद्यमानः सन् सर्वं दृग्गोचरीकृतः स्यादिति। द्वाविशसर्गे महाकविः अद्य वर्तमानकाले भगवतो महावीरस्य विज्ञानसन्तुलिततत्प्रदत्तोपदेशस्य आत्यन्तिकीं आवश्यकतां सूचयति। भगवतो महावीरस्य उपदेशवर्त्मनि च सामाजिकान् सञ्चरितुं महाकविः काव्यविधिना सूचयति। एवं महाकाव्यस्यायं संक्षिप्तपरिचयः।

### ३.सुदर्शनोदयमहाकाव्यम्–

काव्यमिदं जयोदयमहाकाव्यस्योत्तरवर्ति काव्यत्वेन गृहस्थदशायां पं.भूरामल शास्त्री इत्येवंनामधारिणा आचार्यज्ञानसागरमहाकविना विरचितम्। जैनमतानुसारं चतुर्विंशतिकामदेवेषु अन्तिमकामदेवस्य सेठसुदर्शनस्य साहित्यिकदार्शनिकशैलीभ्यां चरित्रचित्रणं काव्यस्यास्य प्रमुखो विषयः। सेठसुदर्शनोऽस्मिन् महाकाव्ये नायकरूपेण वर्तते। सेठसुदर्शनः कश्चिद् गृहस्थोऽपि सन् तस्य सदाचारस्य शीलस्य एकपत्नीव्रतस्य च माहात्म्यमत्र उदयपदेन द्योतितं भवति। सः नायकः कामुकाभिः कामिनीभिरपि एकदाराव्रताद् विचलितो न भवतीति उदाहरणेनात्र शीलमहिमगानं महाकवेः प्रमुखध्येयभूतम्। काव्यमिदं रूढितः सर्वतो दूरीभूय दार्शनिकसाहित्यिकपरम्पराभ्यां सन्निहितं शब्दच्छटाभिः अनुप्रास–यमकादिभिः उपमादिभिः अर्थालङ्कारैश्च नितरां शोभां वहते। जगत्प्रपञ्चरूपरागवह्नौ दह्यमानस्य काव्यनायकस्य वीतरागतापरम् अलौकिकानन्दविषयकमनुभवं कविरत्र अनुभावयति काव्यमाध्यमेन। महाकाव्येऽस्मिन् ९सर्गाः ४८१ पद्यानि च समाहितानि सन्ति।

काव्येऽस्मिन् यत्रैकत्र साहित्यिकांशानां अनुप्रासाद्यलङ्काराणामुपमाद्यर्थालङ्काराणां प्राचुर्यं वर्तते तत्रैव दार्शनिकविषयवस्तुनः अपि प्राचुर्यात् कवेः माघस्य शिशुपालवधमहाकाव्यमिव काव्यमिदं विदुषां कृते प्रौढत्वमापादयति। नायकचरित्रवर्णनेन जैनाचारसंहितायाः परिचयोऽपि मनोरञ्जकतयात्र भवतीति काव्यं सर्वविधोपकारकं सन्तिष्ठते समेषाम्।

**४.भद्रोदयमहाकाव्यम्**

महाकाव्यमिदं पं.भूरामल शास्त्री इत्येवंनामधारिणा आचार्यज्ञानसागरमहाकविना विरचितम्। सत्यव्रतमहिमवर्णनपरं काव्यमिदं भद्रमित्र[५] इत्याख्यस्य नायकरूपस्य श्रावकजनस्य चरित्रमहिमानं काव्यविधिना गायति।[६] महाकाव्यान्ते नायकः सत्यव्रतमहिम्ना परमात्मदशाम् उपगच्छति। समुद्रदत्तचरित्रम् इत्यपि अस्य नामान्तरं सुप्रसिद्धम्। काव्येऽस्मिन् ९ सर्गाः ३४५पद्यानि च वर्तन्ते। नायकस्य समुद्रदत्तस्य (भद्रमित्रस्य) नाम्नः काव्यस्य नामकरणं कुमारसम्भवादिकाव्यसदृशम् औचित्यं बिभर्तीत्यत्र न विसंवादः।

**७.बुन्देलखण्डगौरवम्–**

काव्यमिदं विद्याभूषणोपाधिभूषितेन पं.गोविन्दराम शास्त्रीमहोदयेन विरचितम्। काव्येऽस्मिन् महाकविना बुन्देलखण्डप्रान्ते जातानां महापुरुषाणामलङ्कारिकशैल्यां वर्णनं कृतं वर्तते। बुन्देलखण्डस्य प्रकृतिः, संस्कृतिः, ऐश्वर्यं च मनोह्लादकं भवति। महापराक्रमी आल्हा, परमाल इत्यादीनां जनिः अत्रैव जाता। यशस्वी छत्रसाल राजा अपि अत्रैव सम्भूतः। वीराङ्गना दुर्गावती, राणी लक्ष्मीबाई, राष्ट्रवीरगणेशविद्यार्थी इत्यादीनां भूमिरियमेव इति गौरवाख्यानं काव्येऽस्मिन् कृतम्। सिद्धक्षेत्रस्य आहारग्रामस्य मूर्तिकला गौरवाय कल्पते। बुन्देलखण्डे एव सुवर्ण–देशव्रज–चित्रकूट–चन्देरी–खजुराहो–नैनागिर इत्यादीनि सिद्धक्षेत्राणि अपि दर्शनीयानि सन्ति।

---

५ . सुमु.द.१.३०.१५

६ . समु.द.प्रस्तावना , पृ.१

**८.लोकाशाहमहाकाव्यम्–**

महाकाव्यमिदं पं.श्रीमूलचन्द्रजैन शास्त्री महोदयेन विरचितम्। अस्मिन् चतुर्दशसर्गाः वर्तन्ते। स्वीयभावपूर्णकल्पनाभिः काव्येऽस्मिन् विषयस्य प्रपञ्चनं कविना कृतं वर्तते। प्रसाद–माधुर्यगुणाभ्यां सहितं विविधशब्दार्थाभ्याम् अलङ्काराभ्यां छन्दोभिश्च काव्यस्य रचना कविना कृता वर्तते।

**९.शान्तिसागरचरितम्–**

आचार्यश्रीकुन्थुसागरविरचितं गद्यमहाकाव्यम्। काव्येऽस्मिन् चारित्रचक्रवर्ति–आचार्यश्रीशान्तिसागरस्य जीवनघटनानां साङ्गोपाङ्गं वर्णनं गद्यकाव्यविधिना कृतम्।

**१०.मङ्गलायतनम्–**

काव्यमिदं गद्यकाव्यविधिना पं. बिहारीलालशर्ममहोदयेन लिखितं वर्तते। काव्यमिदं कवेः दण्डिनः दशकुमारचरितमिव लालित्यपरिपूर्णं वर्तते। १३९ गद्यरचनासु काव्यस्य विषयवस्तु कविना रोचकतया प्रतिपादिता वर्तते। काव्यस्य इतिवृत्तं पुराणेतिहासप्रसिद्धं वर्तते। भगवतो महावीरस्य जीवनचरितं गद्यकाव्यविधिना विलिख्य भगवान् महावीरः अत्र धीरप्रशान्तनायकः वर्तते। शब्दार्थालङ्काराणां शान्त–शृङ्गारादिरसानां निरूपणं काव्येऽस्मिन् प्रसादगुणप्राधान्यपूर्वकं भवति।

**११.वर्णिचरितम्–**

श्री.रामनाथपाठकप्रणयिमहोदयेन विरचितमिदं गद्यकाव्यं वर्तते। काव्येऽस्मिन् कविना श्रीवर्णीसंस्कृतविद्यालयसंस्थापकस्य श्रीगणेशप्रसादवर्णिमहोदयस्य चरित्रचित्रणं गद्यकाव्यविधिना कृतम्।

**१२.स्वर्णाचलमहाकाव्यम्–** काव्यमिदं पं.बालचन्द्रजैनशास्त्रिणा[७] विरचितमिति दार्शनिकविषयाः काव्यस्यास्य मूलाधारत्वेन सन्ति।

**१४.शान्तिसिन्धुमहाकाव्यम्–**

स्थानकवासिश्वेताम्बरजैनपरम्पराऽचार्यश्रीघासीलालमहाराजविरचितमिदं महाकाव्यम्।

**१५.भिक्षुचरितमहाकाव्यम्–**

काव्यमिदं नथमलमुनिविरचितं वर्तते। काव्येऽस्मिन् साध्वाचाराधारेण विषयवस्तु प्रस्तुतः महाकविना।

## २. खण्डकाव्यम्

खण्डकाव्यं पूर्वोक्तरीत्या प्रबन्धकाव्यस्य एको भेदो भवति। खण्डकाव्यस्य स्वरूपं, रस–पात्र–इतिवृत्तादिकं महाकाव्यस्य तुल्यमेव भवति; केवलम् एतल्लघुकायकाव्यं भवति। अतः लघुकाव्यमित्यपि प्रोच्यते। सर्गादिविभागो अत्र न कल्पितो भवति। एतदुपलक्ष्य आचार्यविश्वनाथेन तस्य स्वरूपं– 'खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारि तत्।।[८]' इत्यादिरूपेण यदेकदेशरूपेण महाकाव्यस्यानुसरणं करोति तत्खण्डकाव्यं भवतीति प्रोक्तम्। कविकालिदासस्य मेघदूतादि, भर्तृहरेः नीतिशतकादि, अमरुककवेः अमरुकशतकादि, प्राकृतकवेः हाल इत्यस्य गाथासप्तशती इत्यादीनि गीतिकाव्यानि अपि खण्डकाव्यरूपेण संस्कृतवाङ्मये प्रसिद्धानि सन्ति।

**१.वचनदूतम्–**

जैनमहाकवेः पं. मूलचन्द्रजैनशास्त्रीमहोदयेन विरचितमिदं विंशशतकस्य खण्डकाव्यम्। काव्यमिदं कविकुलगुरोः कालिदास्य मेघदूतस्य नूनं स्मारकम्। जैनपरम्परायां द्वाविंशतीर्थकरस्य भगवतो नेमिनाथस्य राजकुमार्याः (राजुल)राजिमत्याः च पुराणप्रसिद्धं जीवनघटितं च

---

[७]. अनेकान्त (५७/१–२)त्रैमासिकं, वीरसेवामंदिरट्रस्ट, देहली. स्वर्णाचय–शान्तिसिन्धु–भिक्षुमहाकाव्यानि अत्र सन्दर्भितानि ज्ञेयानि।
[८]. सा.द.६

कथावर्णनमिदं खण्डकाव्यरूपेण निरूपितम्। नेमिनाथराजिमत्योः नायकनायिकयोः तयोःयुवकालिकं प्रसङ्गमवलम्ब्य अन्तर्मनसि विरहदशायामभिवर्धमानः अनुरागातिशयः अत्र वर्णितः। काव्यस्यास्य कथानकं नेमिदूतखण्डकाव्यस्य कथानकाधारेण वर्तते। खण्डकाव्यमिदं भागद्वये विभक्तम्। अस्य खण्डकाव्यस्य पूर्वार्धे ६७ श्लोकाः सन्ति यत्र ध्यानस्थयूवकं श्रीनेमिनाथं प्रति नायिकायाः राजिमत्याः मनोविरहव्यथाः उपवर्णिताः सन्ति। उत्तरार्धे ८४ श्लोकाः सन्ति यत्र बहुधा याचयन्ती राजिमतिः नेमिनाथस्य तपोनिमग्नस्य व्यवसायिमनोदशामवलोक्य समागमभावस्य अशक्यत्वात् पूर्णतः हताशा गिरनारपर्वतप्रदेशात् प्रत्यावर्तते। प्रत्यावर्तनकाले एकपक्षे सा यद्यपि हताशा परं अन्यस्मिन् पक्षे मोक्षवरं प्रति श्रीनेमिनाथं प्रति तं प्राप्तुं(हताशाऽपि) मोहिता दृश्यते। एतत्सर्वं विदित्वा तस्याः सखीनां पित्रोश्च राजिमतिं प्रति भावनाः अन्तिमपद्येषु लभ्यन्ते इति भागद्वयस्य विषयवस्तु। कालिदासस्य काव्यलेखनविधेः प्रभावः अत्र स्पष्टतया दृश्यते। नेमिनाथस्य विरक्तेः गिरनारगिरौ न केवलं राजिमतिः अपितु प्रकृतिस्थाः पक्षिणः अपि प्रभाविताः सन्तीति वचनदूतस्य निम्नपद्येन ज्ञातुं शक्यम् –

अस्मिन्नद्रावपगतघृणं पक्षराजीर्विधूय, उड्डीयन्ते कतिचिदबलां त्यागिनं त्वां निरीक्ष्य।
एतान् पश्य त्वमिह वद किं साङ्गना म्लानचित्ताः, सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः।।

दैन्यभावमुपगता राजिमतिः न तथा दुःखिता वक्तुं शक्यते यतः सा श्रीनेमिनाथं मोक्षवरं पतिरूपेण प्राप्तुमवश्यं सफलिता भविष्यतीति तस्याः विश्वासः तां अन्तर्मनसः आनन्दयति महाकवेः अभिप्रायः निम्नपद्येन द्रष्टुं शक्यः–

मुक्तिचेतः प्रियसहचरी नाथ! नास्मीह रुष्टा, आगच्छेत्त्वां वरितुमिह सा तामहं स्तौमि नौमि।
स्वस्मिन् रत्नत्रयमनुपमं पूर्णमाधेहि तत्र, सोपानत्वं कुरु मणितटारोहणायाग्रयायी।।

एवं काव्यमिदं विंशशतकेऽपि खण्डकाव्यस्य अनुपमम् उदाहरणमवस्थितमित्यत्र नास्ति लेशोऽपि सन्देहः।

### २.मयूरदूतम्–

वि.सं.१९९३ तमे वर्षे धुरन्धरविजयमुनिना विरचितोऽयं ग्रन्थः १८० शिखरिणीपद्येषु वर्तते। अत्र चातुर्मासावसरे कपडवणजग्रामस्थितेन विजयामृतसूरिणा गुजरातप्रदेशस्य जामनगरे स्थिते स्वीयगुरुं विजयनेमिसूरिं प्रति स्वीयवन्दनसन्देशः, क्षमापना च प्रेषिता इत्यस्य काव्यस्य विषयवस्तु।[९] अत्र दूतरूपेण मयूरः वर्तते इति कृत्वा काव्यस्यास्य नाम मयूरदूतमिति। अत्र सन्देशवाहकस्य मयूरस्य, स्थलद्वयमध्यस्थितानां धर्मस्थलानां प्रकृतेः च नयनरम्यवर्णनं कविना सुचारुरूपेण कृतम्।

### ३.इन्दुदूतम्–

जम्बूकविना त्रयोविंशतिमालिनीपद्येषु ग्रन्थस्यास्य रचना कृतेति ग्रन्थभण्डागारसूच्याधारेण ज्ञायते।[१०] विरचितोऽयं ग्रन्थः। अस्मिन् अन्त्ययमकालङ्कारस्य प्रयोगः प्रत्येकं पद्ये कविना उपयोजितः।

एवं उपरितनसंदेशखण्डकाव्यानामतिरिक्ततया विनयप्रभकविना सङ्कलितस्य चन्द्रदूतस्य उल्लेखोऽपि लभ्यते। तथैव मनोदूतमिति अज्ञातकर्तृकमुपलभ्यते।

## लघुकाव्यानि–

### १. सूवर्णसूत्रम्

आचार्यश्रीकुन्थुसागरवर्येण वैश्विकशान्तिम् उपस्थापयितुं विश्वजनीनं कल्याणं च साधयितुं कृतिरियं विनिर्मिता। लघुकाव्यस्यास्य प्रारम्भः वीरजिनेशस्य मङ्गलस्तवनेन नमस्करणेण च

[९].द्र.जैनसाहित्य का वृहद् इतिहास, पार्श्वनाथविद्यापीठ,वाराणसी
[१०].जैनसाहित्य का वृहद् इतिहास–षष्ठोऽभागः, पार्शवाथ विद्यापीठं,वाराणसी

भवति। काव्येऽस्मिन् – "धनस्य बुद्धेः समयस्य शक्तेर्निजो जनं प्राणहिते सदैव। स जैनधर्मः सुखेदाऽसुशान्तिर्ज्ञात्वेति पूर्वोक्तविधिर्विधेयः।।" इत्यादिभिः लघुसंख्याकैः पदैः विश्वशान्तिर्विधेयेत्येव कामना विहिता।

**२. संवेगरतिकाव्यम्–**

काव्यमिदं पूज्यमुनिश्रीप्रशमरतिविजयगुरुणा विहितम्। चतुर्षु प्रस्तावेषु विभक्तं काव्यमिदं सामान्यजनान् पापकर्मभ्य दूरीभूय पुण्यकर्मणि प्रवर्तयितुं प्रेरयति। कविना काव्येऽस्मिन् स्वीयागाधज्ञानानुभवयोः परिचयः कारितः। पापानि विहाय पुण्यकर्माणि उपादेयानि। पुण्यकर्माणि आदायाऽपि अन्तिमदशायां हेयानि भवन्ति तदानीम् आत्मनः सर्वोच्चदशायां पापपुण्ययोःपरे आत्मसुखमभीष्टं भवति तत्प्राप्तव्यं भवतीति काव्यस्यास्य उपदेशः।

**३. बाहुबलीयम्–**

विश्वविख्यातस्य श्रवणबेलगोलास्थितस्य श्रीगोमटेश्वरबाहुबलीजिनस्य जीवनविषयकं गुणगौरवविषयकं अष्टसर्गात्मकं काव्यमिदं श्रीवृषभप्रसादजैन(लखनऊ)कविवर्येण विरचितम्। श्रीगोमटेशप्रतिमायाः सहस्राब्दमहामस्तकाभिषेकावसरे, महावीरप्रकाशनम्, अलिगंज, एटा उत्तरप्रदेशतः काव्यस्यास्य प्रकाशनं २२ फेब्रुवारी, १९८१ तमे वर्षे जातम्।

**४. मुनिमनोरञ्जनाशीतिः–**

काव्यमिदं पं.भूरामलशास्त्रिणा(आचार्यज्ञानसागरेण) यद्यपि काव्यविधया रचितं तथापि प्रधानतया आचारशास्त्रविषयं अभिधत्ते इति कारणात् आचारधर्मशास्त्रविभागे विस्तरेण प्रतिपादितं वर्तते। ततो द्रष्टव्यम्।

**५. भक्तिसङ्ग्रहः**

काव्यमिदं दर्शनाधृतकाव्यविभागे विस्तरेण प्रतिपादितं वर्तते। ततो द्रष्टव्यम्।

### ६. शान्तिशृङ्गारविलासः-

काव्यमिदं पं.के.भुजबलीशास्त्री विरचितं विद्यते। काव्येऽस्मिन् शान्तरसस्य वस्तुतः शृङ्गारित्वं भवतीति शान्तरसप्रधानतया शान्तस्य विविधविलासान् आनन्दतरङ्गान् अत्रोपवर्णितं विद्यते।

### ७. आत्मनिवेदनम्

काव्यमिदं पं.के.भुजबलीशास्त्री विरचितं विद्यते। काव्येऽस्मिन् दार्शनिकविषयाणां वर्णनं काव्यविधया कृतं विद्यते।

## लघुकाव्येषु स्तोत्रकाव्यानि-

जैनकाव्यपरम्परायां पुराकालादारभ्य आचार्यसमन्त्रभद्रेण स्वयम्भूस्तोत्रं स्तुतिविद्यास्तोत्रं चेति, सिद्धसेनदिवाकराचार्येण कल्याणमन्दिरस्तोत्रं, द्वात्रिंशिकास्तोत्रं चेति, आचार्यदेवनन्दिपूज्यपादवर्येण सिद्धभक्तिः, श्रुतभक्तिः, चारित्रभक्तिः, योगिभक्तिःम्, आचार्यभक्तिः, पञ्चगुरुभक्तिः, तीर्थकरभक्तिः, शान्तिभक्तिः, समाधिभक्तिः, निर्वाणभक्तिः, नन्दीश्वरभक्तिः, चैत्यभक्तिः विद्यानन्दिपात्रकेशरीस्तोत्रं चेति भक्तिपराणि स्तुतिकाव्यानि, तथैव मानतुङ्गाचार्येण सुविख्यातं भक्तामरस्तोत्रं, भट्टाकलङ्केण अकलङ्कस्तोत्रं, बप्पभट्टिवर्येण सरस्वतीस्तोत्रं, चतुर्विंशतिजिनस्तुतिश्चेति, वादिराजसूरिणा ज्ञानलोचनस्तोत्रं, अध्यात्मशतकं चेति, आचार्यहेमचन्द्रेण वीतरागस्तोत्रं महादेवस्तोत्रं महावीरस्तोत्रं चेति, जिनप्रभसूरिणा चतुर्विंशतिजिनस्तोत्रम्, चतुर्विंशतिजिनस्तुतयः इत्येवंविधरूपेण स्तोत्रकाव्यानि विरचितानि। अस्यां विंशशताब्धावपि आचार्यैः कविमनीषिभिश्च स्तुतिकाव्यानि विरचितानि तानि अत्र प्रकृतत्वात् आदौ अवलोकयामः।-

## १.शारदास्तुतिः–

विंशशतकस्य उत्तरार्धे आचार्यश्रीविद्यासागरगुरुणा स्तोत्रकाव्यस्य अस्य रचना कृता। काव्येऽस्मिन् आचार्यवर्येण द्रुतविलम्बितच्छन्दसि द्वादशपद्येषु जिनवचनरूपायाः शारदेति अपरनामाभिधेयायाः सरस्वतीदेव्याः स्तुतिः तस्याः गुणानां सालङ्कारिकवर्णनपुरस्सरं संसारदग्धतां दूरीकर्तु कामना काव्यरूपेण व्यक्तीकृता वर्तते। आचार्यवर्यस्येयं प्रथमा कृतिरित्यपि ज्ञेयो विषयः। स्तुतिरियं मदनगंज–किशनगढनगरे चातुर्मासकाले १९७१ तमे वर्षे विरचितेति भाति।

## २.आचार्यश्रीज्ञानसागरसंस्तुतिः–

एकादशपद्यात्मकं पं.मूलचन्द्रशास्त्रीविरचितं काव्यमिदं आचार्यश्रीज्ञानसागरमुनीद्रस्य पं.भूरामलशास्त्रीति गृहस्थदशानामधारिणः महाकवेः स्तुतिपरं काव्यम्। महाकवेः ज्ञानसागराचार्यस्य प्रतिभासम्पन्नव्यक्तित्वस्य विद्वत्तायाः सफलकाव्यरूपप्रदर्शनेन काव्यस्यास्य नामकरणं आचार्यश्रीज्ञानसागरसंस्तुतिः इति कविना कल्पितम्। संस्तुतावस्यां महाकवेः ज्ञानसागरस्य व्यक्तित्वं कथं झटिति विशदीभवति स कथं विद्वज्जनेषु सुविख्यात इति निम्नपद्येन स्पष्टीभवति–

निस्सारां परिभाव्य संसृतिमिमां बाल्येऽपि धर्मस्पृहः,<br>
मुक्तिस्त्रीनवसङ्गमोत्सुकमना अत्यादरादत्यजत्।<br>
श्रीवीराब्धिगुरोर्निपीय नितरां सद्धर्मसन्देशनां,<br>
विद्वन्मानसराजहंससदृशो नोऽव्याच्छिवाब्धिर्गुरुः।। इति।

एवं प्रस्तुतरचनायां दार्शनिकसिद्धान्तानां, सांसारिकासारतायाः, विरक्तेः, गुरुभक्तेः, आचार्योचितगुणानां च निरूपणं सुन्दरदृशा कविना कृतम्। भाषायाः लालित्यं,

काव्योचितपदावलिप्रयोगः, उपमादिकाव्यालङ्काराणां यथोचितमात्रायां विनियोगः कवेः पं.मूलचन्द्रशास्त्रिमहोदयानां विशेषता वर्तते इति स्तोत्रकाव्येऽस्य विशिष्टं स्थानम्।

३.गणेशस्तुतिः–

पं.मूलचन्द्रशास्त्रिवर्येण श्रीगणेशसंस्कृतविद्यालय, (मोराजी)सागरसंस्थानस्य संस्थापकस्य श्रीगणेशप्रसादवर्णीमहोदयस्य जीवनघटितानामंशानामाधारेण स्तोत्रकाव्यमिदं विरचितं वर्तते। शार्दूलविक्रीडितच्छन्दसि पद्यानां रचना वर्तते। काव्येऽस्मिन् भावानां सजीवता स्पष्टतयाऽनुभूयते। प्रसादमाधुर्यगुणयोः प्राधान्यं, उपमाऽनुप्रसाद्यलङ्काराणां प्राचूर्यं, वैदर्भी रीतिश्च प्रधानाऽत्र उपवर्णिता। कवेः वर्णनपद्धतिः काव्यवाचनान् नूनं भावयति।

## अष्टकस्तोत्र-काव्यानि –

पद्यसंख्यासूचककाव्यानां रचना भारतीयसाहित्येतिहासे प्राचीनकालाद् अवस्थिता दृश्यते। पुराकाले दिगम्बरजैनपरम्परायाम् अष्टकस्तोत्रकाव्यानां रचनाः बाहुल्येन सञ्जातस्य परिचयो भवति। यावन्त्यष्टककाव्यानि उपलभ्यन्ते तेषु अष्टौ पद्यानि एकस्मिन्नैव च्छन्दसि आराध्यस्य स्तुतिपराणि भवन्ति। अष्टपद्येभ्यः अन्यदेकम् उपसंहारात्मकमपि पद्यं प्रायशः अनुष्टुप्च्छन्दसि भवति। बाहुल्येन अष्टककाव्यानि स्तुतिपराणि भवन्ति तद्भिन्नानि कानिचन तत्त्वव्यवस्थाप्रतिपादनपराण्यपि भवन्ति। पुराकालाद्विख्यातानि मङ्गलाष्टकम्, महावीराष्टकम्, दृष्टाष्टकम्, सुप्रभाताष्टकम्, पुरुदेवाष्टकम्, बाहुबल्यष्टकम्, आत्मभावनाष्टकम्, उपयोगाष्टकम्, अध्यात्माष्टकम्, मन्दालसाष्टकम्, पार्श्वनाथाष्टकम्, शान्तिनाथाष्टकम्, शान्त्यष्टकम्, नेमिनाथाष्टकम्, यतिभावनाष्टकम्, जिनपूजाष्टकम्, करुणाष्टकम्, ब्रह्मचर्याष्टकम् चेत्यादीनि अष्टकस्तोत्रकाव्यानि लभ्यन्ते। अत्र विंशशतके उपलभ्यमानानाम् अष्टकस्तोत्रकाव्यानां परिचयं वयं जानीमहे।

## १.विद्याष्टकम्–

दिगम्बरसन्तशिरोमणेराचार्यश्रीविद्यासागरस्य प्रथमदीक्षितेषु अन्यतमशिष्येण मुनिश्री–नियमसागरेण काव्यस्यास्य रचना स्वीयगुरोः प्रति स्तुतिं भक्तिञ्च विधातुं चित्रकाव्यविधया विहिता। काव्येऽस्मिन् यद्यप्यष्टौ पद्यानि सन्ति परं तेषामर्थगार्भीर्यात् स्वोपज्ञसान्वयसंस्कृतव्याख्यानेन हिन्द्यनुवादेन च ग्रन्थस्यास्य स्वरूपं महाकाव्यवद् सुविशालं जातं वर्तते। प्रत्येकं पद्यं एकैकं काव्यरूपमखण्डार्थं प्रकटयति।

काव्यस्यास्य लेखनस्फुरणे मुनिश्रीनियमसागरमुनिनैव विरचितस्य परं अद्यावध्यप्रकाशितस्य रत्नत्रयस्तुतिशतकमिति ग्रन्थस्य चारित्रनिरूपणपरं १०२ तमपद्यं वर्तते। चारित्रस्वरूपविषये निरन्तरात्मध्यानादिसाधनया ग्रन्थकृता प्रकटितार्थगाम्भीर्येण विस्तारेण च काव्यस्यास्य प्रादुर्भावो जातः।

चित्रकाव्येऽस्मिन् कविना शब्दचित्रस्य अर्थचित्रस्य महान् चमत्कारः विविधैः असामान्यैः काव्यबन्धैः उपदर्शितः। सर्वतोभद्रबन्धः, भारतदेशबन्धः, कलशबन्धः, श्रीफलबन्धः, स्वस्तिकबन्धः, रेडक्रासबन्धः, टेपरिकार्डरबन्धः, चतुरक्षरबन्धः, मृत्युकूपबन्धः, सिद्धचक्रबन्धः इत्यादि लौकिककाव्यबन्धविलक्षणैः काव्यस्यास्य वैलक्षण्यं संस्कृतचित्रकाव्यपरम्परां विशेषं योगदानं प्रददाति। एतेषां विलक्षणबन्धानां पठनविधिरपि कविना काव्ये चित्रादिमाध्यमेन व्याख्यादिस्थलेषु प्रदत्ता इति कारणात्काव्यस्य पठने विवरणादिभिः कविनैव सौकर्यं कल्पितम्।

## २.जिनाष्टकावलिस्तोत्रम्–

संस्कृतभाषायां विरचितमिदं चतुर्विंशतितीर्थकराणां स्तवनपरं स्तोत्रकाव्यं पं.फुलचन्द्रशास्त्रीजखौरा महोदयस्य वर्तते। काव्येऽस्मिन् प्रत्येकं तीर्थकरस्य महिमवर्णनं विशिष्टगुणनिरूपणं च ८–८ पद्येषु स्तुतिरूपेण कविना कृतम्। प्रत्येकं तीर्थकरस्य स्तुतेः अन्तिमं

पद्यम् अनुष्टुप् च्छन्दसि वर्तते। काव्येऽस्मिन् काव्योपयोगिनां समेषां गुणानामन्तर्भावो स्थले स्थले अवलोकयितुं शक्यः।

**३.सरस्वतीवन्दनाऽष्टकम्–**

काव्यमिदं सागर(मध्यप्रदेशे) स्थितस्य श्रीगणेशप्रसादवर्णि–संस्कृतविद्यालयस्य प्राचार्यपं.श्री दयाचन्द्रशास्त्रीमहोदयेन विरचितम्। अष्टपद्यसमन्वितं काव्यमिदं जिनवचोभूतायाः वाग्देवतायाः गुणान् स्तौति।

**४.महावीराष्टकम्–**

डॉ.भागचन्द्र भागेन्दुना विरचितम्। सर्वविधासु जिनपूजाग्रन्थेषु महावीराष्टकमिदं अवश्यंभाविततया नित्यपठनीयविभागे प्रकाशितमुपलभ्यते।

**५.शान्तिसागरस्तुति–अष्टकम्–**

पूज्यगणिनीप्रमुखज्ञानमती आर्यिकया (तपस्विन्या) चारित्रचक्रवर्तिशान्तिसागरगुरोः स्तुतिः अष्टककाव्यरूपेणात्र प्रस्तूयते। अष्टपद्यात्मकेऽस्य काव्यस्य अन्ते अनुष्टुपि छन्दसि नवमपद्यं काव्योपसंहृतिं प्रस्तौति।

**६.शिवसागरस्तुति–अष्टकम्–**

पूज्यगणिनीप्रमुखज्ञानमती आर्यिकया (तपस्विन्या) शिवसागरगुरोः स्तुतिः अष्टककाव्यरूपेणात्र प्रस्तूयते। अष्टपद्यात्मकेऽस्य काव्यस्य अन्ते अनुष्टुपि छन्दसि नवमपद्यं काव्योपसंहृतिं प्रस्तौति।

**७.महावीरकीर्तिस्तुति-अष्टकम्-**

पूज्यगणिनीप्रमुखज्ञानमती आर्यिकया (तपस्विन्या) महावीरकीर्तिगुरोः स्तुतिः अष्टककाव्यरूपेणात्र प्रस्तूयते। अष्टपद्यात्मकेऽस्य काव्यस्य अन्ते अनुष्टुपि छन्दसि नवमपद्यं काव्योपसंहृतिं प्रस्तौति।

**८.धर्मसागराष्टकम्-**

पूज्यगणिनीप्रमुखज्ञानमती आर्यिकया (तपस्विन्या) धर्मसागरगुरोः स्तुतिः **"तं धर्मसागरमिनीन्द्रमहं प्रवन्दे"** इत्येवम् अष्टककाव्यरूपेणात्र प्रस्तूयते। अष्टपद्यात्मकेऽस्य काव्यस्य अन्ते अनुष्टुपि छन्दसि नवमपद्यं काव्योपसंहृतिं प्रस्तौति।

९.सन्मतिसागराष्टकम्-

आचार्यश्रीसुविधिसागरेण स्वगुरोः सन्मतिसागराचार्यस्य स्तवनं प्रस्तुताष्टकलघुकाव्यमाध्यमेनात्र कृतम्। अस्य प्रकाशनं महाराष्ट्रप्रान्ते कुञ्जवनप्रकाशनम्, उदगांवतः सञ्जायमानं वर्तते।

१०.विशुद्धाष्टकम्-

संस्कृतप्राकृतोभयभाषाविदुषी डॉ.कुसुम पटोरिया, इत्यनया महोदयया विरचितम्। दिगम्बरजैनखण्डेलवालप्रान्तीयसभा, नागपूरतः एतस्य प्रकाशनं २०१३ तमे वर्षे सञ्जातम्।

११.क्षमाष्टकम्-

संस्कृतप्राकृतोभयभाषाविदुषी डॉ.कुसुम पटोरिया, इत्यनया महोदयया विरचितम्। दिगम्बरजैनखण्डेलवालप्रान्तीयसभा, नागपूरतः एतस्य प्रकाशनं २०१३ तमे वर्षे सञ्जातम्।

### १२.प्रबोधाष्टकम्-

आचार्यश्री महावीरकीर्तिविरचितं अष्टपद्यात्मकं अष्टकलघुकाव्यमिदं आचार्यवर्येण स्वीयगुरोः आचार्यश्रीआदिसागरअंकलीकरस्य सल्लेखनानन्तरमेव(समाध्यनन्तरं) गुरुगुणानां स्तुत्यभिप्रायेण शार्दूलविक्रीडितच्छन्दसि विरचितम्। अस्य प्रकाशनं कुञ्जवनप्रकाशनं (उदगॉव) कोल्हापूरतः सञ्जातम्।

### १३.बाहुबल्यष्टकम्-

काव्यमिदं पण्डितवर्येण पन्नालालजैनसाहित्याचार्यमहोदयेन विरचितम्। अष्टौ पद्यानि सन्तीति कारणादष्टकमुच्यते। तं सदाहं नमामि इति पदं सर्वत्र पुनरावर्तितमिति कारणात् पण्डितवर्यस्य गोमटेश्वरबाहुबलिभगवन्तं प्रति अनन्यनिष्ठा भक्तिश्च आसीदिति सिद्ध्यति।

## शतककाव्यानि-

पद्यसंख्यासूचकरचनानां परम्परा संस्कृतसाहित्ये प्राचीना समृद्धतरा च संस्कृतकाव्यपरम्परा वर्तते। प्राकृत-अपभ्रंशभाषादीनामिव संस्कृतसाहित्येऽपि अष्टकम्, दशकम्, पञ्चविंशतिः, द्वात्रिंशिका, पञ्चाशिका, शतकम्, सहस्रं साहस्री वा इत्यादीनि संख्यापदान्तर्भावकृतानि काव्यनामानि अवलोक्यन्ते। एतेषु संख्यापदान्तर्भावकृतनामसु शतककाव्यपरम्परा संस्कृतसाहित्ये व्यापकरूपेण प्रसृता। साहित्येतिहासावलोकनेन ज्ञायते यत् जनसामान्यानां रुच्यतिशयत्वात्संस्कृतकविभिः शतककाव्यलेखनं विपुलतया विहितम्। नीतिवचांसि, स्तोत्रं, चरितवर्णनं, इतिहासः, छन्दः, कोशः, आयुर्वेदः, सदाचारः, शृंगारः विरक्तिभावश्चेते जीवनोपयोगिनः अंशाः शतककाव्यस्य विषयरूपेण अवतिष्ठन्ते। ई.स.षष्ठशताब्धेः कालादारभ्य शतककाव्यलेखनपरम्परा साहित्ये अनवरततया अवलोक्यते। जैनसाहित्येऽस्य लेखनं प्रचूरतया जातम्।

जैनशतककाव्यानां रचनाः अपि उपरितनकाव्यपरम्परानुगुणं तत्तत्काले सञ्जाता दृश्यन्ते। विंशशतके आचार्यज्ञानसागरस्य (पं.भूरामलशास्त्रिणः) (१८९१–१९७३) सम्यक्त्वसारशतककाव्यं जैनदर्शने आचारसंहितां जैनसिद्धान्तं च शतककाव्यविधिना निरूपयति। आचार्यविद्यासागरमुनिविरचितानि शतककाव्यान्यपि दर्शनतत्त्वबोधकानि संस्कृतसाहित्यजगति अद्य निःशेषरूपेण विख्यातानि जातानि सन्ति। तद्विस्तरेणात्र अवलोकयामः।

**१.श्रमणशतकम् –**

सन्तशिरोमणिः आचार्यश्रीविद्यासागरमुनिना विरचितमिदं काव्यं श्रमणानां जैनसाधूनां आचारसंहिताविषयकं प्रबोधनं शतककाव्यविधिना करोति। काव्येऽस्मिन् कविना श्रमणानां कृते बाह्येन्द्रियप्रवृत्तेः दूरीभवितुम् आत्मनि च प्रवर्तयितुमुपदिष्टं वर्तते। आत्मानं परमात्मानं च कदापि न विस्मर्तव्यम्। विस्मरणीयानि च इन्द्रियजन्यसुखदुःखानि भवन्ति। कविना ३६ तमे पद्ये दिगम्बरश्रमणस्य कृते प्रशमभावना कदापि न त्याज्या यतोहि प्रशमभावपूर्वकमेव जन्ममृत्योः चक्रं स्थगितं भवतीति –

यस्य हृदि समाजातः प्रशमभावः श्रमणो यथाजातः।
दूरोऽस्तु निर्जरातः कदापि मा शुद्धात्मजातः।।[११] इति

निम्नपद्येन स्पष्टीभवति। आलस्ययुतं परिग्रहवतः च साधोः गृहस्थस्य च परमात्मप्राप्तिर्न भवति शिथिलाचारिणः तु कुत्रापि गतिर्न भवतीति कविना –

न हि कैवल्यसाधनं केवलं यथाजातप्रसाधनम्।
चेन्न पशुरपि साधनं व्रजदव्ययमन्नजसा धनम्।। इति

[११]. श्र.श.३६

पद्येन स्पष्टीकृतम्। ९४पद्येषु कविना श्रमणानां कृते हेयोपादेयानि विवेच्य शततमे पद्ये आत्मनो लाघवं प्रदर्शितम्। १०१ तमे श्लोके गुरोः स्वात्मनो नामोल्लेखनं श्लेषात्मकविधिना कृतमिति काव्यमिदं यद्यपि धर्मशास्त्रनिरूपकं तथापि शतककाव्यविधिना विरचितं प्रसिद्धिमवाप।

**२.भावनाशतकम्–**

शतककाव्यमिदम् आचार्यविद्यासागरगुरुणा विरचितम्। काव्येऽस्मिन् संसारस्य बीभत्सवर्णनं कृत्वा जनानां चेतांसि संसारतः विरक्तानि भवितुमुपायो निर्दिष्टः। काव्यस्य अस्य रचनापद्धतिः यदि एवं शक्यते तर्हि इदं कथं न इति रूपा भक्तामरस्तोत्रमनुसरति। भावनानां कथनं करोतीति भावनाशतकमिति नामकरणं सार्थकम्। काव्येऽस्मिन् ८४ पद्यानि आर्या च्छन्दसि, १६ पद्यानि च अनुष्टुप् च्छन्दसि वर्तन्ते। कृतिरियं कविना ११.०५.१९७५ तमे वर्षे विरचिता आसीत्।

**३.निरञ्जनशतकम्–**

काव्यमिदं नामानुरूपं आत्मानं कर्माञ्जनकल्मषाद् दूरीकरोत्विति भावनां व्यनक्ति। आत्मनो निरञ्जनशुद्धदशा काव्यस्य विषयः। अस्य रचना महावीरतीर्थकरस्य जन्मभुवि कुण्डलपुरनगरे कृता। आहत्य १०५ पद्यानि सन्ति। आत्मनो निरञ्जनदशा संसारदशातः नितरां भिन्ना भवतीति काव्येऽस्मिन् –

परपदं ह्यपदं विपदास्पदं निजपदं निपदं च निरापदम्।
इति जगाद जनाब्जरविर्भवान् ह्यनुभवन् स्वभवान् भववैभवान्।।[१२] इति

तृतीयपद्येन स्पष्टीभवति।

[१२]. नि.श.३

## ४.परिषहजयशतकम्

श्रमणानामाचारविषयकेषु केषुचन नियमेषु परिषहजयित्वस्य नियमः अपि अत्यावशकः भवति। द्वाविंशतिः परिषहाः भवन्ति। परिषहाः नाम बाह्यबाधाः। तासु बाधासु श्रमणो विजयी भवितव्यः इत्यस्य नामकरणं परिषहजय इति भवति। एतत् परिषहजयविषयमधिकृत्य कविना आचार्येण विद्यासागरेण द्रुतविलम्बितच्छन्दसि शतमितानि पद्यानि विरचय्य शतककाव्यस्यास्य रचना कृता। कविः श्रमणान् निम्नपद्येन –

गणधरैः प्रणतोऽस्ति यदा स्वयं–समितिषूपरतः सुखदः स्वयम्।
किमु तदाप्य सतां प्रणतेर्नुतेरिति वदन्ति बुधः सुमते नु ते।।[१३]

स्वावलम्बी करोति। अस्य काव्यस्य रचना कोनीस्थिते अतिशयतीर्थक्षेत्रे ७.३.१९८२ तमे वर्षे जाता।

## ५.सुनीतिशतकम्–

काव्यमिदं नामानुरूपं नीतिवचोभिः मुमूक्षून् धर्ममार्गस्य धर्मस्य च उपदेशं करोति। तत्रैव शास्त्राधारेण जीवनयापयन्तां श्रमणानां कृते ओजोमयैः शब्दैः कविः मुनिधर्मे स्थिरीकरोति। तद्यथा–

मूल्येन पुष्टं च मलेन तुष्टं, नवीनवस्त्रं न हि नीरपायि।
गुरूपदेशामृतरागहीनः शास्त्रोपजीवी खलु धीवरोऽपि।।[१४]

लौकिकसंस्कृते विख्यातस्य रतिप्रधानस्य शृङ्गाररसस्य संकल्पनां कविः अपाकुर्वन् वास्तविकतया अध्यात्मिकदृशा शृङ्गीभूतभावनारूपस्य शान्तरसस्य एव प्रकर्षतां स्पष्टीकरोति। काव्यमिदं १०१ श्लोकमितं झारखण्डप्रान्ते सम्मेदशिखरतीर्थस्थिते ईसरीनगरे विरचितम्।

[१३] . परि.श.८२

[14] . सु.श.२

**६.रत्नत्रयस्तुतिशतकम्–**

मुनिश्रीनियमसागरविरचितमिदं शतककाव्यं त्रिष्वधिकारेषु विभक्तं वर्तते। यत्र त्रिरत्नानां सम्यग्दर्शन–सम्यग्ज्ञान–सम्यक्चारित्राणां निरूपणं कविना कृतम्। काव्यमिदं प्रकाशनाधीनं वर्तते। अस्य काव्यस्य १०२ तमपद्यस्य विस्तारः कविना विद्याष्टकम् इति अष्टककाव्यमाध्यमेन चित्रकाव्यविधया कृतः।

**७.सम्यक्त्वसारशतकम्–**

वाणीभूषण पं. श्रीभूरामलशास्त्रिणा (आचार्यश्रीज्ञानसागरेण) शतककाव्यविधया विरचितमिदं काव्यम्। काव्यमिदं दार्शनिकविषयवस्तु निरूपयतीति कृत्वा अस्मिन्नेव अध्याये जैनदार्शनिककृतीषु विस्तरेण उपवर्णितम्। तत्ततो द्रष्टव्यम्।

## ३. चम्पूकाव्यम्–

काव्यस्य चम्पूरित्येकः अन्यतमो गद्यपद्यमिश्रितःकाव्यप्रकारः।[१५] यथा संगीतकर्मणि गीतं वाद्यं च परस्परोपकारकं रोचकतामापादयति तथैव चम्पूकाव्यं गद्यविधिना पद्यविधिना च काव्ये काञ्चिद्विशिष्टां समाजरसिकतामापादयति। एतत्प्रशसायामेव कविः भोजः रामायणचम्पूग्रन्थस्य आरम्भे चम्पूकाव्यम्–

गद्यानुबंधरसमिश्रित–पद्यसूक्तिः, हृद्यापि वाद्यकलया कलितेव गीतिः।

तस्माद्दधातु कविमार्गजुषां सुखाय, चम्पूप्रबंधरचनां रसना मदीया।।

इत्येवंरूपेण स्तौति। चम्पूकाव्यप्रकारस्य आचार्यदण्डिना स्वीयकाव्यादर्शे कृतेन समुल्लेखेन ज्ञायते यत् आचार्यदण्डिनः पूर्वमपि चम्पूकाव्यप्रकारः साहित्यक्षेत्रे कविजनेषु सुतरां परिचितः स्यात्। तथापि कवेः त्रिविक्रमभट्टस्य पूर्वतनाचार्यास्य कस्यापि चम्पूग्रन्थकृतयः नोपलभ्यन्त इति कृत्वा

[१५] .गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते। (सा.द.)

संस्कृतसाहित्येतिहासकारैः अद्ययावत्प्राप्तचम्पूग्रन्थेषु सर्वेभ्यः प्राचीनतमोऽस्य त्रिविक्रमभट्टस्य(इ.९१५) नलचम्पूरेवाङ्गीक्रियते।

जैनचम्पूकाव्यपरम्परायां जैनसंस्कृतसाहित्यशास्त्राचार्यैःवाग्भटहेमचन्द्रादिभिः कविभिश्च चम्पूकाव्यस्य स्वरूपलक्षणादिकं किञ्चित्परिवर्तनपुरस्सरं यथास्थिति अङ्गीक्रियते। चम्पूकाव्यविधायाः लक्ष्यभूतग्रन्थानां रचनाः अपि तत्तत्काले जाताः। तदत्र प्रस्तुतविषये विंशशतके जातानां चम्पूकाव्यरचनां विषयेऽत्र विस्तरेण अवलोकयामः।–

### १.दयोदयचम्पूकाव्यम्–

संस्कृतसाहित्ये चम्पूकाव्यपरम्परा पुराकालादेव अतिशेते। चम्पूकाव्यस्य गद्यपद्यमिश्रत्वात् विषयवस्तुनः सहजतया गद्यमाध्यमेन पद्यमाध्यमेन च सामाजिकानां सरल–सहजबोधो जायते इति चम्पूकाव्यस्य वैशिष्ट्यं भवतीति कृत्वा बा.ब्र.पं.भूरामलशास्त्रिणा आचार्यज्ञानसागरदीक्षोत्तरनामधारिणा महाकविना नायकादिभिः पात्रविशेषैः हिंसाचारिणः धीवरस्य काव्यनायकस्य मृगसेनस्य अहिंसाव्रतमाहात्म्यं साहित्यिकशैल्याम् उपवर्णितं वर्तते। अहिंसाव्रतेन सः महान्नहिंसकः दयावान् वा आसीदिति द्योतयितुं कविना दयोदयचम्पूः इत्येवं नामकरणं काव्यस्यास्य कृतम्। काव्यस्य नायकभूतः मृगसेनधीवरः प्रतिदिनं मत्स्यान् जाले प्रत्यारोप्य तेषां क्रयणेन जीवनयापनं करोति स्म। परं तस्य एकेन अहिंसामूलकेन दयामूलकेन वा नियमेन सर्वापि जीवनदशा परिवर्तयितुं समारब्धा। जैनमुनिप्रभावेन तेन एकः नियमः अङ्गीकृतः आसीत् यत्– जाले समागतस्य प्रथममत्स्यस्य कृतेऽहं जीवनदानं दयादानं वा विधास्यामीति। एकदा पञ्चवारमपि सैव प्रथमः मत्स्यः जाले समागतेऽपि दयावता नियमधारिणा मृगसेनेन स मत्स्यः जले त्यक्तः तं जीवनदानं च प्रदत्तम्। तेन पुण्यकर्मणा स भवान्तरे तेनैव मत्स्येन संकटात् प्रतिवारितः। एकेन अहिंसाव्रतेन सः निम्नकुलादुन्नतकुले जनिं प्राप्य आत्मनःपरमात्मदशां

साधयामास इति काव्यस्यास्य शान्तरसे पर्यवसानम्। शब्दालङ्काराणामनुप्रास-यमकादीनाम् उपमाद्यर्थालङ्काराणां च यथायोग्यतया सन्निवेशः काव्येऽस्मिन् शोभामावहति।

काव्येऽस्मिन् ९ लम्बकानि, १६६ पद्यानि च वर्तन्ते। कविना गृहस्थदशायां पं.भूरामल शास्त्री इत्येवंनामधारिणा आचार्यज्ञानसागरेण काव्यमिदं व्यरचि। एतस्य प्रकाशनं वीरसेवामन्दिरट्रस्ट, जयपुरतः १९९४तमे वर्षे सम्पन्नम्।

**२.वर्धमानचम्पूकाव्यम्-**

वर्धमानचम्पूकाव्यं पं.मूलचन्द्रशास्त्रीवर्येण गद्यपद्यमिश्रविधिना विरचितं काव्यं वर्तते। संस्कृतसाहित्येतिहासे जैनचम्पूकाव्यपरम्परायाः अभिवर्धने कविसोमदेवसूरिविरचितस्य यशस्तिलकचम्पूकाव्यस्य महद्योगदानं वर्तते। तां चम्पूकाव्यपरम्परां विंशशतकेऽस्मिन्नर्वाचीनकाले अभिवर्धयितुं महाकविना पं.मूलचन्द्रशास्त्रीन्यायतीर्थमहोदयेन सर्वविधसफलप्रयत्नैः यतितम्।

काव्येऽस्मिन् चतुर्विंशतमतीर्थकरस्य भगवतो महावीरस्य जीवनघटितानां पञ्चविधानां कल्याणकानां महोत्सवानां काव्यात्मकरीत्या वर्णनं कविना यथार्थतया कृतम्।

काव्येऽस्मिन् प्रकृतिचित्रणस्य कविनिष्ठयथास्थितिवर्णनपद्धतिः काव्यशोभां स्थले स्थले नितराम् अभिवर्धयति। कविः ग्रीष्मऋतोः वर्णनं -

तीव्रस्तापस्तपति तपने ग्रीष्मकाले यदेह,
जायेतास्मात् सुखविरहिता प्राणिनां क्लेशहेतुः।
क्षोणी शुष्का भवति सरसा मृत्तिका नीरसा च.
वाति प्राणप्रद इह तदा प्राणहारी समीरः।। इति

पद्येन  सामाजिकानां चेतांसि हारयति।

**३.महावीरतीर्थकरचम्पूकाव्यम्**–

चम्पूकाव्यमिदं श्रीपरमानन्दवैद्यरत्न पाण्डेयविद्वद्वरेण विरचितम्। काव्येऽस्मिन् कविना चतुर्विंशतितमस्य भगवतो महावीरस्य जीवनघटितानामशांनां गद्यपद्यमिश्रितविधिना वर्णनं कृतम्।

## ४. मुक्तककाव्यानि –

**१.वर्णीसूर्यः**– अमृतलालशास्त्रीविरचितमिदं मुक्तककाव्यं कविना गुरोः श्रीगणेशप्रसादवर्णी – महोदयस्य गुणगानविषयमधिकृत्य विरचितकाव्यं वर्तते। श्रीगणेशप्रसादवर्णीस्मृतिग्रन्थेऽस्य काव्यस्य प्रकाशनं जातम्। कविः अशिक्षां दानवपत्नीरूपेण, अनुचितरूढिपरम्परां पिशाचिनीरूपेण काव्येऽत्र उपवर्णयति। अत्र न केवलं साहित्यिकांशा अपितु ऐतिहासिकानामंशानामपि अत्रान्तर्भावनं कविना कृतं दृश्यते। वर्णीमहोदयं सूर्योदयरूपेण उपवर्णयन् कविः श्रीगणेशप्रसादवर्णी जनसामान्यस्य ध्वान्तनाशकः ज्ञानज्योतिःप्रदायकः वर्तते इति साधयति।

**२.गोपालदासो गुरुरेक एव –** अमृतलालशास्त्रीविरचितमिदं मुक्तककाव्यं कविना गुरोः श्रीगोपालदासवरैयावर्यस्य गुणगानविषयमधिकृत्य विरचितकाव्यं वर्तते। कविरत्र वरैयागुरुं सर्वेभ्यः श्रेयान् प्रतिपाद्य सकलविद्वान्नुपास्योऽस्तीति –

श्रीमद्वरैया वरवंश जन्म, सन्मान्यमानार्चितपादपद्मः।
गोपालदासः स गुरुर्गुरूणामुपासनीयो विदुषां न केषाम्।।

पद्येन प्रतिपादयति। स्तुतिपरकभावानां प्रवाहःकाव्ये सर्वत्र प्रवहमानो दृश्यते।

**३.श्रद्धाप्रसूनाञ्जलिः–** कविना रचनेयम् आचार्यमहावीरकीर्तिगुरुं प्रति स्तुतिगानापेक्षया विरचिता। आचार्यवर्यस्य विशेषगुणान् वर्णयन्पण्डितवर्यः सकलमुनिपूजनीयतां –

विमलगुणमणीनां मालयालङ्कृतो यः,<br>
सदसि मुनिजनानामग्रगण्यो बभूव।<br>
गुणिगण गणनीयं श्रीमहावीरकीतिः,<br>
अधिगतसुरलोकं के न तं संस्मरन्ति।। इति

पद्येन द्योतयति।

**४.पावनप्रवाहः–** ग्रन्थोऽयं पं.चैनसुखदासन्यायतीर्थवर्येण संस्कृतसुभाषितपद्येषु विरचितः। मुक्तककाव्यविधायां विरचितोऽयं ग्रन्थः सुभाषितानां पावनप्रवाहैः चेतांसि नूनं रञ्जयति। कविना ग्रन्थेऽस्मिन् आत्मनः पावनत्वं सम्पादयितुं चतुर्दशघटकानाम् आधारेण गहनचिन्तनमासाधितं वर्तते।

**५. प्रवचनप्रकाशः–** ग्रन्थोऽयं पं.चैनसुखदासन्यायतीर्थवर्येण संकलनात्मकविधिना विरचितः। संस्कृतजैनाचार्यप्रतिपादितानाम् आत्मा, धर्मः, कषायः, पापं, पापनिरोधः, विरक्तिः, इन्द्रियाणि, मनोविज्ञानं, भक्तिः, ध्यानं, साम्यभावश्चेति विविधानां सप्तदशाध्यात्मिकविषयाणां संस्कृतपद्येषु विवेचनं कृतम्। जैनजैनेतरसंस्कृतानुरागिणां कृते कृतिरियं महती उपकारिणी भवति।

## ▪ संस्कृतव्याकरणं तद्योगदानञ्च ।

संस्कृतव्याकरणशास्त्रविषयकं पुराकाले आचार्यपूज्यपादविरचितं जैनेन्द्रव्याकरणं सर्वविधव्याकरणसम्प्रदायेषु स्वीयं विशिष्टं स्थानं धारयति। एतद्व्याकरणाधारेण एव उत्तरवर्तिन्यः जैनसंस्कृतव्याकरणरचनाः सञ्जाता इत्यपि ज्ञातव्यो विषयः।

विंशशतके उपलभ्यमानासु जैनसंस्कृतव्याकरणरचनासु कृतिद्वयमेव प्रामुख्येन उपलभ्यते इति वक्तुं युज्यते। –

१. आर्हत्व्याकरणम्–

स्थानकवासिश्वेताम्बराचार्यश्रीघासीलालमहाराजविरचितेयं कृतिः। जैनेन्द्रव्याकरणविधिना संस्कृतभाषायाः व्याकरणं शब्दप्रक्रियां चात्र ग्रन्थकृता निरूपितं वर्तते।

२. धातुरत्नकोशः–

श्वेताम्बरसाधुना लावण्यविजयसूरिणा संस्कृतधातुरत्नकोशः विरचितः। संस्कृते विद्यमानानां प्रायःसकलानां धातूनां रूपाणि दशसु लकारेषु अनुसंधानप्रद्धत्यनुरूपाणि निरूपितानि सन्ति। सकलसंस्कृतभाषाजिज्ञासूनां कृते धातुरूपाणामेकत्र संकलनमनेन विधीयते इति परमोपकारिकेयं कृतिः।

३. **जैनसंस्कृतव्याकरणम्–** कृतिरियं जैनकविमनीषिणा डॉ.नेमिचन्द्र जैन महोदयेन विरचिता वर्तते।

४. **उच्चतरमाध्यमिकसंस्कृतव्याकरणम्–** कृतिरियं जैनकविमनीषिणा डॉ.महेन्द्रकुमारजैन (भगवां, मध्यप्रदेशः) महोदयेन विरचिता वर्तते।

■ **संस्कृतन्यायविषयिन्यःकृतयः तद्योगदानञ्च ।**

प्रस्तावनाध्याये यथोक्तरीत्या ईसापूर्वशतकाद् आरभ्य जैनन्यायमौलिककृतीनां नैकाः रचनाः आचार्यसमन्तभद्र-भट्टाकलङ्कादिभिः जैनाचार्यैः विरचिताः। विंशशतके हस्तलिखितादिदशासु प्राप्तस्थितीनां तासां रचनानां संस्कृतटीकालेखनपूर्वकं सम्पादनकार्यं प्रचूर्येण जातं यस्य उल्लेखनं तत्तत्प्रविभक्ताध्यायेषु कृतं तत्ततो द्रष्टव्यं भवति। विंशशतके न्यायविषयकमौलिककृतिसम्बद्धा रचना अधोलिखितरूपेण उपलभ्यते। -

**१.न्यायरत्नम्-**

पं.मूलचन्द्रशास्त्रीमहोदयेन न्यायसम्बद्धं ग्रन्थरत्नमिदं विरचितम्। सुकुमारमतीनां अस्मादृशानां कृते जैनन्यायशास्त्रे प्रवेशप्राप्त्यर्थं ग्रन्थस्यास्य अध्ययनं सहकारि भवति। न्यायरत्नग्रन्थेन साकं शास्त्रीमहोदयेन लिखिताः तिस्रः संस्कृतटीकाऽपि उपलभ्यन्ते।

**२.जैनदर्शनसारः-**

पं.चैनसुखदास न्यायतीर्थमहोदयेन कृतिरियं सारभूतत्वेन विरचिता। तत्र चतुर्थाध्याये न्यायविषयकप्रमाणनिरूपणं विस्तरेण सरलभाषया च कल्पितं ग्रन्थकृता। अत एव कृतिरियं राजस्थानसंस्कृतविश्वविद्यालयस्य राजस्थानविश्वविद्यालयस्य च एम.ए. आदिअभ्यासक्रमेऽपि योजिता वर्तते।

इदमत्र विशेषतया ध्यातव्यं वर्तते यद् विंशशतकीयजैनाचार्यैः कविमनीषिभिश्च जैनन्यायमौलिककृतीनामपेक्षया अद्ययावद्रचितानां मौलिककृतीनां व्याख्यया, अनुवादेन, संशोधनेन च पुरस्सरं सम्पाद्य प्रकाश्यतामानयनस्य कार्यं प्रधानतया विहितम्।

■ आचारसंहिता–धर्मशास्त्रविषयिन्यःकृतयः तद्योगदानश्च ।

**१.मुनिमनोरञ्जनाशीतिः–**

दिगम्बरजैनपरम्परानुसारं साधूनामाचारविषयकोऽयं ग्रन्थः अशीतिपद्यैः समन्वित इतिकृत्वा नाम्नः सार्थकत्वं वहते। काव्यमिदमुपदेशात्मविधिना विरचितम्। तात्कालिक्यः सर्वविधस्थितयः मतौ संस्थाप्य महाकविना दिगम्बरमुनेः चर्याविषयकं मनोरमवर्णनं काव्येऽस्मिन् कृतम्।

काव्यमिदं साधूनां कृते नित्यपाठरूपेण उपयुज्यते। साध्वीनां शास्त्रोक्तचर्याविषयकं निरूपणमपि अस्मिन् काव्ये कविना विहितम्। जैनश्रमणानां कृते प्रवृत्तिधर्मत्वेन निवृत्तिधर्मत्वेन च यो शास्त्रनिर्दिष्टमार्गः तस्य निरूपणमस्मिन् काव्ये विधाय साधुजगतो महान् उपकारो विहितः। एतस्य प्रकाशनम् आचार्यज्ञानसागरवागर्थविमर्श केन्द्रं, ब्यावरतः १९९६ तमे वर्षे जातम्।

**२.हितसम्पादकम्**

कृतिरियं दार्शनिकतर्कचूडामणिना महाकविना गृहस्थदशायां पं.भूरामल शास्त्री इत्येवंनामधारिणा आचार्यज्ञानसागरेण विरचिता। हितसम्पादकं किमित्युक्ते ग्रन्थकृतानुसारं जैनदर्शनमिति समाधानं भवति। जगत्यस्मिन् हितस्य सम्पादकं जैनदर्शनोक्ताचारविचारमाध्यमैरेव सम्पद्यत इति धिया जैनदर्शनस्य हितसम्पादकत्वमापद्यते इति ग्रन्थकर्तुः दृष्टिः। अत्राऽऽरम्भे धर्मस्वरूपनिरूपणम्, आत्मलक्षणं, देहात्मयोः भेदः, गृहस्थधर्मः, गृहस्थधर्मस्य लौकिकपारमार्थिकेति प्रकारद्वयं, योगि–गृहस्थयोर्भेदः, पुरुषार्थचतुष्टयं, वर्णविभागः, वर्णानां कर्मपरविभागः इत्यादयो विषयाः विवेचिताः सन्ति। पद्यसंख्या ३८ तः ६० यावत्पर्यन्तं वर्णव्यवस्थाविषयकं विवेचनं आचार्यजिनसेनकृताऽऽदिपुराणानुसारं[१६] ग्रन्थकृताऽत्र उपवर्णितम् । गृहस्थसामान्यजनानां आचारशुद्धिः विचारशुद्धिश्च सम्पद्येत तथाच रूढिभञ्जनं च समाजतः

---

[१६] .आ.पु.३८.४५–४६

नितरां सम्पद्येत इति धिया ग्रन्थकृताऽस्य ग्रन्थस्य रचना विहिता। आचारसंहितां जैनदर्शनदिशा प्रतिपादयतीति कृत्वा ग्रन्थरत्नमिदं जैनदर्शनीयवाङ्मयस्य गौरवास्पदं वहते। ग्रन्थेऽस्मिन् अनुष्टुप्च्छन्दसि विरचितानि १५९ पद्यानि सन्ति। एतस्य प्रकाशनं वीरसेवामन्दिरट्रस्ट, जयपुरतः १९९४तमे वर्षे सम्पन्नम्। ।

**३.शान्तिसुधासिन्धुः-**

आचार्यश्रीकुन्थुसागरविरचितस्यास्य ग्रन्थस्य विषयः आचार्यशान्तिसागरगुरोः काव्यात्मकशैल्या चरित्रचित्रणं वर्तते। कविना उपमाविरोधाभासस्वभावोक्तिदृष्टान्तादिनैकानाम् अलङ्काराणां माध्यमेन जनमनसि अध्यात्मभावना उज्जीवितदशामानीता। काव्ये व्यतिरेकालङ्कारपुरस्सरं निम्नपद्येन –

चिन्तामणिः कल्पतरुः सुरेशो दासो नरेशोऽपि भवेत्फणीशः।
नरेन्द्रराज्यं वरकामधेनुश्चिन्तामणिः कल्पतरो वनादि।
अध्यात्मविद्याकृपया तथा स्यात् स्वानन्दसाम्राज्यसुखं समीक्ष्य,
ज्ञात्वेत्यविद्यां प्रविहाय भव्यैरध्यात्मविद्या हृदि धारणीया।। इत्येवं

अध्यात्मभावनां निरूपयति। एतस्य प्रकाशनं आचार्यकुन्थुसागरजैनग्रन्थमाला, सोलापूरतः जातम्।

**४.श्रावकधर्मप्रदीपः –**

आचार्यश्रीकुन्थुसागरस्येयं मौलिककृतिः गृहस्थधर्माचरणस्य शिक्षां काव्यरूपेण पाठयति। विख्यातस्य आचार्यसमन्तभद्रस्य श्रावकाचार ग्रन्थरचनेव इयं कृतिः महत्त्वं बिभर्ति। जैनगृहस्थजनैः श्रावकैः आजीवनं कथं वर्तितव्यं कानि आवश्यकानि कर्माणि, कानि च हेयानि इत्यादीनि जैनदर्शनानुरूपतथ्यानि अत्र उपवर्णितानि सन्ति। एतस्य प्रकाशनं आचार्यकुन्थुसागरजैनग्रन्थमाला, सोलापूरतः जातम्।

**५.सम्यक्त्वचिन्तामणिः –**

जैनदर्शने रत्नत्रयं मोक्षमार्गं निर्दिशतीति कृत्वा मोक्षदशामवाप्तुं प्रस्थितस्य श्रावकस्य श्रमणस्य च कृते यो आचारमार्गो विहितः तस्य मोक्षमार्गस्य आचार्य उमास्वामिना तत्त्वार्थसूत्राख्ये स्वीयग्रंथे प्रारम्भे एव 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' इति सूत्रपूर्वकम् उल्लेखनं विधाय महत्त्वं प्रदर्शितम्। पण्डितप्रवरेण पन्नालालसाहित्याचार्यमहोदयेन अस्य सूत्रे निर्दिष्टस्य प्रत्येकं रत्नमधिकृत्य रचनाः विहिताः। तत्र प्रस्तुतोऽयं ग्रन्थः आचारधर्मनिष्ठस्य सम्यग्दर्शनरत्नस्य चिन्तामणिरत्नमिव दुर्लभत्वम् इति दिशा निरूपणं विधाय सम्यग्दर्शनस्य जनसामान्ये जीवात्मनि किं स्वरूपं, महत्त्वं चेति स्पष्टीकरोति।

ग्रन्थोऽयं दशसु मयूखेषु विभक्तः। प्रथमे मयूखे सम्यग्दर्शनस्य स्वरूपं, द्वितीयतृतीयचतुर्थेषु जीवतत्त्वं, पञ्चममयूखे अजीवतत्त्वं, षष्ठे आस्रवतत्त्वं, सप्तमे अष्टमे च बंधसंवरयोः तत्त्वयोः निरूपणं, तथाच, नवमे मयूखे तपसः निरूपणं, दशमे च अन्तिमस्य मोक्षतत्त्वस्य निरूपणं कविना कृतं वर्तते। आहत्य १८१६ पद्येषु ग्रन्थोऽयं विरचितः। आरम्भे गुरोः गणेशप्रसादवर्णिमहोदयस्य रेखाचित्रं विधाय गुरोःकृते कृतिसमर्पणं कृतम्। ग्रन्थे प्राक्कथने सिद्धान्ताचार्यकैलासचन्द्रशास्त्रिमहोदयानां कथनानुसारं काव्यस्य रचना प्रसादमाधुर्यगुणाभ्यां सम्पन्ना वर्तते।

काव्येऽस्मिन् १९ च्छन्दांसि मालिनी, स्वागता, उपजाति, इन्द्रवज्रा, अनुष्टुप्, शार्दूलविक्रीडितं, वसन्ततिलका, उपेन्द्रवज्रा, प्रमदाननं, भुजङ्गप्रयातं, द्रुतविलम्बितं, वंशस्थं, स्रग्धरा, शालिनी, मञ्जुभाषिणी, शिखरिणी, रथोद्धता, हिन्दीगीतिका चेति प्रयुक्तानि दृश्यन्ते। ग्रन्थस्य भाषा सरला प्राञ्जला च वर्तते। रसच्छन्दःअलङ्कारगुणरीत्यादिभिः काव्योचितघटकैः युक्तेऽस्मिन् काव्ये सम्यग्दर्शनस्य सर्वेषां प्रमुखाङ्गानां विवेचनं कविना कृतमिति

दार्शनिकविषयवस्तु कविना काव्यरूपेण प्रस्तूयते इति विशेषतयाऽत्र उल्लेखनीयं भवति। विरचितेऽस्मिन् ग्रन्थे आचारप्रधानतया दार्शनिकविषयः निरूपितःइति कृत्वा आचारशास्त्रविषयकेऽस्मिन् विभागे ग्रन्थस्यास्य अन्तर्भावो प्रदर्शितः। ग्रन्थस्यास्य प्रकाशनं वीरसेवामंदिरट्रस्ट, वाराणसीतः १९८५ तमे वर्षे जातम्।

**६.सज्ज्ञानचन्द्रिका(सम्यग्ज्ञानचिन्तामणि)–**

यथापूर्वमुक्तरीत्या पण्डितप्रवरेण पन्नालालसाहित्याचार्यमहोदयेन प्रत्येकं रत्नमधिकृत्य जैनदर्शने रचनाः विहिताः। तत्र प्रस्तुतोऽयं ग्रन्थः आचारधर्मनिष्ठस्य सम्यग्ज्ञानरत्नस्य चिन्तामणिरत्नमिव दुर्लभत्वम् इति दिशा निरूपणं विधाय सम्यग्ज्ञानस्य जनसामान्ये जीवात्मनि किं स्वरूपं, महत्त्वं चेति स्पष्टीकरोति।

ग्रन्थोऽयं दशसु प्रकाशेषु विभक्तः। मति–श्रुत– अवधि–मनःपर्यय–केवलज्ञानानि पञ्चप्रकारकाणि भवन्ति। तेषां सविस्तृतं विवेचनं मालिनी, स्वागता, उपजाति, इन्द्रवज्रा, अनुष्टुप्, शार्दूलविक्रीडितं, वसन्ततिलका, उपेन्द्रवज्रा, भुजङ्गप्रयातं, द्रुतविलम्बितं, वंशस्थं, स्रग्धरा, शालिनी, मञ्जुभाषिणी, शिखरिणी, रथोद्धता, हरिगीतिका, हिन्दीगीतिका चेति च्छन्दःसु कृतं दृश्यन्ते। आहत्य ७९७ पद्येषु ग्रन्थोऽयं विरचितः। ग्रन्थस्य भाषा सरला प्राञ्जला च वर्तते। वैदर्भीरीतिः, शान्तरसस्य काव्येऽस्मिनन्तर्भावो दर्शनीयः। सम्यग्ज्ञानस्य प्रमाण–नयविषयसम्बद्धस्य विषयवस्तुपुरस्सरं विरचितेऽस्मिन् ग्रन्थे आचारप्रधानतया दार्शनिकविषयः निरूपितःइति कृत्वा आचारशास्त्रविषयकेऽस्मिन् विभागे ग्रन्थस्यास्य अन्तर्भावो प्रदर्शितः। ग्रन्थस्यास्य प्रकाशनं वीरसेवामंदिरट्रस्ट, वाराणसीतः १९८५ तमे वर्षे जातम्।

### ७.सम्यक्चारित्रचिन्तामणिः-

पूर्वोक्तविधिना पण्डितप्रवरेण पन्नालालसाहित्याचार्यमहोदयेन प्रत्येकं रत्नमधिकृत्य जैनदर्शने रचनाः विहिताः। तत्र प्रस्तुतोऽयं ग्रन्थः आचारधर्मनिष्ठस्य सम्यक्चारित्ररत्नस्य चिन्तामणिरत्नमिव दुर्लभत्वम् इति दिशा निरूपणं विधाय सम्यग्ज्ञानस्य जनसामान्ये जीवात्मनि किं स्वरूपं, महत्त्वं चेति स्पष्टीकरोति।

ग्रन्थोऽयं त्रयोदशसु प्रकाशेषु विभक्तो वर्तते। सम्यक्चारित्रस्य साङ्गोपाङ्गं निरूपणं ग्रन्थेऽस्मिन् ग्रन्थकृता विहितम्। तदर्थं, मालिनी, स्वागता, प्रमाणिका, आर्या, उपजाति, इन्द्रवज्रा, अनुष्टुप्, शार्दूलविक्रीडितं, वसन्ततिलका, उपेन्द्रवज्रा, भुजङ्गप्रयातं, द्रुतविलम्बितं, वंशस्थं, स्रग्धरा, शालिनी, हरिणी चेति सप्तदशसु च्छन्दःसु कृतं दृश्यन्ते। आहत्य १०७२ पद्येषु ग्रन्थोऽयं विरचितः। ग्रन्थस्य भाषा सरला प्राञ्जला च वर्तते। वैदर्भीरीतिः, शान्तरसस्य काव्येऽस्मिनन्तर्भावो दर्शनीयः। ग्रन्थेऽस्मिन् सम्प्रति विवर्धमाने चारित्रविषयकशिथिलप्रवर्तने अपि ग्रन्थकृता प्रकाशो विहितः। ग्रन्थस्यास्य प्रकाशनं वीरसेवामंदिरट्रस्ट, वाराणसीतः १९८५ तमे वर्षे जातम्।

### ८.धर्मकुसुमोद्यानम्-

द्विविधजैनपरम्परायां पर्युषणपर्वणो विशेषमहत्त्वं वर्तते। पं.पन्नालालसाहित्याचार्यः ग्रन्थकृता उत्तमक्षमा, उत्तमार्जवं, उत्तमार्दवं, उत्तमशुचिता, उत्तमसत्यं, उत्तमसंयमः, उत्तमतपः, उत्तमत्यागः, उत्तमाकिञ्चिन्यं, उत्तमब्रह्मचर्यं चेति दशधर्माणाम् आचरणयोग्यानां निरूपणं प्रसादगुणसमन्वितैः ११० पद्यैः कविना कृतम्। अस्य प्रकाशनं जिनवाणी प्रेस, कोलकातातः नैकवारं विहितम्।

### ९.संस्कृतसामायिकपाठः–

सद्गृहस्थेन श्रावकेण विहितदैनन्दिनकर्मणां निर्जरार्थं प्रतिदिनं सामायिकपाठस्य पठनं करणीयं भवितीति शास्त्रपरम्परा। पं.पन्नालालसाहित्याचार्यप्रवरेण रचितायां संस्कृतरचनायामस्यां ७३ पद्यानि सन्ति। उचितानुचितानां कर्मणां आलोचनं, स्वकर्मनिन्दनं, पुनः तदनाचरणविषयकसंकल्पनं चेते विषयाः सामायिकपाठे विवेच्याः भवन्ति। सामायिकस्य प्रतिक्रमणकर्म, प्रत्याख्यानकर्म, स्तुतिकर्म, वन्दनाकर्म, कायोत्सर्गकर्म चेत्यादिविषयाणां निरूपणं विस्तरेण विहितम्। रचना भावपूर्णा, सरसा, गेया च वर्तते।

### १०.जैनदर्शने मुक्तिमार्गः–

पं.श्रेयांसजैन सिंघई इति महोदयेन संस्कृतभाषायां निरूपितेऽस्मिन् मौलिकग्रन्थे जैनमतपरम्परायां मोक्षप्राप्तये आचारविचारस्वरूपस्य यथार्थजिनधर्मोपदिष्टस्य मार्गस्य निरूपणं कृतम्। ग्रन्थेऽस्मिन् दार्शनिकविचाराणां विवेचनं तत्तत्स्थले प्रदत्तं वर्तते। जीवात्माऽयं संसारिजीवः कथं स्वीयात्मानं मुक्तदशायां नेतुं शक्नुयात् तदर्थं को वा यथार्थतया मार्गः इत्यादिविषयाणां निरूपणमस्मिन् ग्रन्थे कृतं वर्तते। मोक्षप्राप्तेः जैनमतानुसारं एकः एव मार्गो भवति सः रत्नत्रयमित्युच्यते। रत्नत्रयं सम्यग्दर्शनं, सम्यग्ज्ञानं सम्यक्चारित्रं च भवति। आचारशास्त्रदिशा अस्य ग्रन्थस्य श्रमणश्रावकयोः द्वयोः कृते सुतरां महत्त्वं वर्तते।

### ११.श्रावकधर्मसोपानम्–

पं.डॉ.श्रीश्रेयांसजैन सिंघई महोदयस्य जैनपरम्परायां धर्मशास्त्रविषयकः षट्सु अध्यायेषु विभक्तः १२६० श्लोकपरिमितो ग्रन्थः विरचय्य प्रकाशनाधीनो वर्तते। यथाशीघ्रकालं प्रकाश्यतामागमिष्यतीति नो विश्वासः। ग्रन्थेऽस्मिन् श्रावकाणां जैनगृहस्थानां साध्वेतराणां कृते आचारविषयकम् आमूलाग्रविवेचनं संस्कृतभाषायां ग्रन्थकृता प्रदत्तम्। ग्रन्थस्यास्य प्रकाशनं राजस्थानविश्वविद्यालयेन १९८५ तमे वर्षे कृतम्।

■ **संस्कृतज्योतिषशास्त्रविषयिन्यःकृतयः तद्योगदानञ्च ।**

ज्योतिषां सूर्यादिग्रहाणां बोधकं शास्त्रं ज्योतिषशास्त्रं भवति। जैनमतानुसारं ज्योतिषशास्त्रस्य उद्भवः विकासश्च विद्यानुवादांगजैनशास्त्रतः परिकर्मवादतश्च जातः।[१७] सर्वोऽपि गणितसिद्धान्तः ज्योतिषपरिकर्मसु उल्लिखितः आसीत् किञ्च, निमित्तसिद्धान्तः विद्यानुवादाङ्गे विवेचितः। प्रश्नव्याकरणाङ्ग जिनग्रन्थे नक्षत्राणां विवेचनं विभिन्नदृशा कृतं वर्तते। एतत्नक्षत्रविवेचनं ज्योतिषशास्त्रस्य उद्भवं विकासं च सूचयति। समवायांगसूत्रग्रन्थे ग्रहणानां कारणानि विवेचितानि।[१८] अनेन उत्तरवर्तिनः जैनज्योतिषशास्त्रस्य मूलानि जैनमूलवाङ्मये सूत्रग्रन्थेषु उपलभ्यन्ते। जैनज्योतिषशास्त्रं विकासकालापेक्षया आदिकालिकं (ई.पू.३०० तः ६००ई.), पूर्व मध्यकालिकं (६०१ ई. तः १००० ई.), उत्तरमध्यकालिकं (१००१ ई. तः १६०० ई.), अर्वाचीनकालिकं (१६०१ तः अद्ययावत्) इत्येवं चतुर्धा विभक्तुं शक्यते।

आदिकालिकजैनज्योतिषरचनासु सूर्यप्रज्ञप्तिः, चन्द्रप्रज्ञप्तिः, अंगविज्जा, लोकविजययन्त्रं ज्योतिष्करण्डकः इत्यादिरचनाः उपलभ्यन्ते। अर्वाचीनकाले जैनज्योतिषशास्त्रविकासे मेघविजयगणि(११शताब्दिः) इतिविदुषः नामकरणं सर्वप्रथमक्रमे संगच्छते। उभयकुशल (१८शताब्दिः) इत्याख्यस्य जैनविदुषः विवाहपटलं, चमत्कारचिन्तामणि इत्येवं मूलग्रन्थद्वयं अर्वाचीनकाले लभते। निष्कर्षतः जैनज्योतिषविषयकं संस्कृतवाङ्मयं भारतस्य साहित्यगौरवस्य संस्कृतेः च यशोवर्धकमित्यत्र विदुषां न लेशोऽपि संशयः।

ज्योतिषशास्त्रं भारतीयविद्यायाः महत्त्वपूर्णम् अङ्गं वर्तते। विंशशतकस्थजैनमनीषिभिरपि अस्य विषये लिखितमधोलिखितरूपेण उपलभ्यते।

---

[१७]. आ.शांतिसागरजी स्मृतिशताब्दिस्मृतिग्रन्थे डा.नेमिचन्द्र शास्त्री

[१८].समवायांग.सू.१५.३

**१.भारतीयज्योतिषम्-**

डॉ.नेमिचन्द्रजैन (ज्योतिषाचार्यः) महोदयेन लिखेतेयं कृतिः विंशशतके ज्योतिषशास्त्रस्य साहित्यं परिपुष्णाति। भारतीयज्ञानपीठतः अस्य प्रकाशनं २०१४ तमे वर्षे जातम्।

**२.मुहूर्तमार्तण्डः-** डॉ.नेमिचन्द्रजैन (ज्योतिषाचार्यः) महोदयेन लिखेतेयं कृतिः विंशशतके ज्योतिषशास्त्रस्य साहित्यं परिपुष्णाति। भारतीयज्ञानपीठतः अस्य प्रकाशनं २०१४ तमे वर्षे जातम्।

- **दर्शनतत्त्वाधृतकृतयः तद्योगदानश्च-**

जैनाचार्याणां कविमनीषिणां च पुराकालादारभ्य विरच्यमाणानां विविधकृतीनां विधाः भिन्नाः भवन्तु नाम परं सर्वापि कृतीः जैनतत्त्वभूतसाध्यस्य सिद्धये एव विनिर्मितानि भवन्तीति कृत्वा यद्यपि उपरि निर्दिष्टानि आचारविषयकानि, काव्यसम्बद्धानि, व्याकरणसम्बद्धानि, ज्योतिषविषयकानि वा कृतिनामानि सन्ति तेषां सर्वेषां साध्यसिद्धिदृशा अस्मिन् दर्शनतत्त्वाधृतग्रन्थविभागे अन्तर्भावनं कर्तुं शक्यते। पं.पन्नालालशास्त्रिणः सम्यक्त्वचिन्तामणिः, सम्यग्ज्ञानचिन्तामणिः, सम्यक्चारित्रचिन्तामणिः इत्येते दार्शनिकग्रन्थेषु अपि गण्यन्ते यद्यपि आचारप्रधानत्वात् मया आचार-धर्मशास्त्रविभागे तेषामन्तर्भावनं विहितम्।

**१.जैनकर्मसिद्धान्ते बन्धमुक्तिविमर्शः-**

जैनदर्शनस्य कर्मसिद्धान्तः पं.डॉ.श्रीश्रेयांसजैन सिंघई महोदयस्य जैनपरम्परायां दार्शनिकविषयस्य प्रतिपादको ग्रन्थः। जैनदर्शनानुसारं जीवात्मा संसारिजीवः कथं कर्म विधत्ते तस्य फलं च कथम् उपात्ते तेनच, संसारपरिभ्रमणं पुनश्च कर्मबन्धनम् एव विधचक्रपरिमिते संसारे जीवात्मा कथंविधां मुक्तिं प्राप्तुं योग्यः सा च मुक्तिः किंप्रकारिणी इत्यादिविषयाणामाहत्य

दर्शनभूतस्य बन्धतत्त्वस्य मोक्षतत्त्वस्य च निरूपणं ग्रन्थेऽस्मिन् ग्रन्थकृता विहितम्। ग्रन्थस्यास्य प्रकाशनं विमलविद्याश्रुतसंस्थानतः २००६ तमे वर्षे जातम्।

**२.जैनदर्शनसारः–**

पं.चैनसुखदासन्यायतीर्थप्रवरस्येयं कृतिः। ग्रन्थेऽस्मिन् समग्रजैनदर्शनस्य सारभूततया संस्कृतभाषायां विवेचनं कृतम्। ग्रन्थोऽयं राजस्थानविश्वविद्यालयेन एम.ए.संस्कृतं आचार्यकक्षायाश्च कृते पाठ्यक्रमपुस्तकरूपेण निर्धारितः वर्तते। चतुर्षु अध्यायेषु विभक्तेऽस्मिन् ग्रन्थे षट्द्रव्याणां, सप्ततत्त्वानां प्रथमाध्याये, प्रमाणस्य विवेचनं द्वितीयाध्याये, नय–स्याद्वाद–सप्तभङ्गिविवेचनं तृतीयाध्याये, निक्षेपविवेचनं च चतुर्थाध्याये कृतं वर्तते।

**३. सर्वार्थसिद्धिसारः–**

जैनाचार्यउमास्वामिनः प्रसिद्धदर्शनग्रन्थस्य तत्त्वार्थसूत्रस्य सर्वार्थसिद्धिरिति वृत्तिः आचार्यपूज्यपादेन विरचिता। तस्य सर्वार्थसिद्धिग्रन्थस्य इदं संक्षिप्तीकरणं सारभूतं च विवेचनं पं.चैनसुखदासन्यायतीर्थवर्येण प्रस्तुतकृतिमाध्यमेन कृतम्। एम.ए.छात्राणां बुद्ध्यनुगुणं वर्तते। पं.डॉ. आदिनाथ नेमिनाथ उपाध्ये महोदयेन अस्याः कृतेः महती प्रशंसा कृता आसीत्। श्री.सी.एस.मल्लिकानाथन् महोदयेन अस्मिन् ग्रन्थे समागतानां पारिभाषिकशब्दानां आग्लभाषायां व्याख्या कृता वर्तते।

**४.भावनाविवेकः –**

पं.चैनसुखदासन्यायतीर्थमहोदयस्य पद्यकाव्यशैल्यां लिखिता दर्शनसम्बद्धा कृतिः। अस्यां तीर्थकरप्रकृतेः बन्धकारणभूतानां षोडशभावनानां पाण्डित्यपूर्णं विवेचनं कविना ३३१ पद्येषु कृतं वर्तते।

□□□

# पञ्चमोऽध्यायः– विभिन्नसंस्कृतशाखासु व्याख्यानवाङ्मयस्य योगदानम्।

पुराकालादारभ्य जैनाचार्यकविमनीषिभिः विरचितस्य मौलिकवाङ्मयस्य सरलीकरणाय सहजबोधाय च जैनागमादिरचनानामाधारेण व्याख्यात्मकसाहित्यस्य रचनाः विपुलतया जाताः दृश्यन्ते। जैनसाहित्यस्य मौलिकवाङ्मयाधारेण निर्युक्तिः, संग्रहणी, भाष्यं, महाभाष्यं, चूर्णि, टीका, विवरणं, निवृतिः, वृत्तिः, दीपिका, अवचूरिः, अवचूर्णिविवेचनम्, व्याख्या, छाया, अक्षरार्थः, पञ्जिका, भाषाटीका, वचनिका इत्यादिव्याख्यात्मकसाहित्यस्य रचनाः प्राक्कालादारभ्य विलिख्यन्ते। विंशशतकस्थाचार्यैः कविमनीषिभिश्च रचितव्याख्यानवाङ्मयस्य अध्ययनमत्र प्रकृतमिति तदवलोकयामः। –

## ▪ टीकावाङ्मयम्–

### १.श्रावकधर्मप्रदीपटीका–

श्रावकधर्मप्रदीपः इति आचार्यकुन्थुसागरमुनिना विरचितैका श्रावकाणाम् आचारसंहिताविषयिनी पञ्चाध्यायसमन्विता विंशशतकीया कृतिर्वतते। अस्याः संस्कृतटीका पं.जगन्मोहनलालशास्त्री पण्डितवर्येण लिखिता। संस्कृतटीकयानया अध्येतॄणां ग्रन्थप्रवेशः सहजतया सम्पद्यते तथाच श्रावकविषयकाचारसंहितायाः बोधोऽपि मध्यममतीनां सौकर्येण जायते।

### २.गद्यचिन्तामणिटीका–

कविवादीभसिंहसूरिविरचितस्य गद्यचिन्तामणिरिति गद्यकाव्यग्रन्थस्य पं.पन्नालाल–साहित्याचार्यविरचितं संस्कृतव्याख्यानं सानुवादं भारतीयज्ञानपीठप्रकाशनंदेहलीतः प्रकाशितम्। गुणभद्राचार्यविरचितम् उत्तरपुराणं गद्यकाव्यस्यास्य उपजीव्यत्वं वर्तते। जीवन्धरकुमारस्य चरितं अत्यधिकादभुतघटनाभिः सहितं गद्यकाव्येऽस्मिन् निरूपितं वर्तते।

**३.जीवन्धरचम्पूटीका–**

महाकविहरिचन्द्रविरचितस्य चम्पूकाव्यस्य संस्कृतटीका सम्पादनं च पं.पन्नालालजी (साहित्याचार्यः)महोदयैः कृतम्। अयं ग्रन्थः सटीकं भारतीयज्ञानपीठप्रकाशन, वारणसीतः प्रकाश्यतामागतः किञ्च, पण्डितवर्याणां सटीकसम्पादितं ग्रन्थमेनं समवलोक्य मध्यप्रदेशशासनसाहित्यपरिषद्, भोपाल इत्यनया संस्थया १९६०तमे वर्षे कुशलग्रन्थसम्पादनार्थं 'मित्रपुरस्कारः' रूपेण सम्माननम् अधिगताः आसन्।

**४.पुरुदेव–चम्पूटीका–**

महाकविना अर्हद्दासेन विरचितस्य गूढतरस्य पुरुदेवचम्पूकाव्यस्य संस्कृतटीका पं.पन्नालाल(साहित्याचार्यः) महोदयेन विरचिता, एतेन संस्कृतटीकालेखनेन संस्कृत–हिन्दीभाषाविदां सारल्यम् उपपन्नम्। अस्य प्रकाशनं वीरनिर्वाणप्रकाशनसमिति, इन्दौरनगरतः ८जानेवारी, १९८२ तमे वर्षे विधाय पं.पन्नालाल(साहित्याचार्यः) महोदयस्य साहित्यसम्माननं विहितम्।

**५.तत्त्वार्थचिन्तामणिटीका–**

पं.माणिक्यचन्द्र कौन्देयमहोदयेन तत्त्वार्थश्लोकवार्तिकालङ्कारः इत्याख्य–ग्रन्थमाधारीकृत्य टीकेयं विरचिता। सार्धैकलक्षश्लोकपरिमितेयं संस्कृतटीका चतुर्दशवर्षाणि यावन्निरन्तरपरिश्रमेण विरचय्य विद्वज्जनेषु भवद् विद्वत्तायाः परिचायिका इव जाता दृश्यते। अस्यां टीकायां भवता सूक्षात्सूक्ष्ममपि तत्त्वं हस्तामलकन्यायेन विशदीकृतं भाति।

**६.चैतन्यचन्द्रोदय(चन्द्रिकाटीका)–**

चैतन्यचन्द्रोदयम् इत्येकं प्रतीकात्मकं नाटकम्। कृष्णमिश्रविरचितस्य प्रसिद्धप्रतीकात्मकस्य प्रबोधचन्द्रोदयनाटकस्य परम्पराम् एतद् वहते। अस्य नाटकस्य चन्द्रिकाटीकाव्याख्यानं तत्रभवता मुनिश्रीप्रणम्यसागरेण संस्कृतभाषायामुपनिबद्धम्।

**७.पुरुषार्थसिद्ध्युपाय(मङ्गलाटीका)–**

मुनिश्रीप्रणम्यसागरविरचितेयं मङ्गला इत्याख्या संस्कृतव्याख्या मुनिश्रीप्रणम्यसागरवर्येण विरचिता।

**८. स्वस्तिटीका–**

आत्मानुशासनमिति मौलिकग्रन्थाधारेण दिगम्बरसन्तशिरोमणिआचार्यविद्यासागरशिष्येण मुनिश्रीप्रणम्यसागरेण स्वस्ति इत्याख्या संस्कृतटीका विरचिता।

**९.श्रमणसंस्कृतटीका–**

पं.श्रेयांसजैनसिंघई–वर्येण संस्कृतटीकेयं ७५६ प्राकृतगाथापरिमितेन समणसुत्तं इति ग्रन्थाधारेन विरचिता। जैनश्रमणानां साधूनां आचारविचारप्रतिपादकस्य विशालकायप्राकृतग्रन्थस्य भगवतो महावीरस्य २५०० तमे निर्वाणमहोत्सवावसरे श्रद्धेयश्री विनोबा भावे वर्याणामुपस्थितौ आलोचनं परिशीलनं च जातमासीत्। एतत्ग्रन्थाधारेण विरचितायाः सुविशालायाः श्रमणटीकायाः लेखनं ज्ञातवृत्तान्तानुसारं ग्रन्थकृता महोदयेन अद्यावधिः समाप्तिमानीतं किञ्च यथावकाशं प्रकाश्यतामानयिष्यते।

**१०.लिंगशीलपाहुड–टीका–**

कुन्दकुन्दाचार्यविरचितस्य अष्टपाहुड इतिमूलग्रन्थस्य नन्दिनी इत्याख्या संस्कृतटीका दिगम्बरसन्तशिरोमणिआचार्यविद्यासागरशिष्येण मुनिश्रीप्रणम्यसागरेण विरचिता।

**११.कादम्बिनीटीका–**

सन्तशिरोमणिआचार्यविद्यासागरशिष्येण मुनिश्रीप्रणम्यसागरेण कुन्दकुन्दाचार्यविरचितस्य बारसानुवेक्खा इति ग्रन्थस्याधारेण कादम्बिनी इत्याख्या संस्कृतटीका विरचिता। द्वादशविधानां भावानां चिन्तनं जैनमते ध्यानस्य विषयो निरूपितः।

**१२.आर्हद्व्याकरणटीका–**

जैनव्याकरणानुरूपं स्थानकवासिश्वेतम्बरपरम्पराऽऽचार्यश्रीघासीलालमहाराज – विरचितेयं स्वोपज्ञटीका वर्त्तते। अस्यां जैनव्याकरणानुरूपं विवेचनं टीकाकृता कृतं वर्तते।

**१३.न्यायरत्नावलिटीका–**

जैनन्यायानुरूपं स्थानकवासिश्वेतम्बरपरम्पराऽऽचार्यश्रीघासीलालमहाराज –विरचितेयं स्वोपज्ञटीका वर्त्तते। अस्यां न्यायरत्नावलिग्रन्थाधारेण विवेचनं टीकाकृता कृतं वर्तते।

- **भाष्यवाङ्मयम्–**

**१.समाधितन्त्र भाष्यम्–** मुनिश्रीप्रणम्यसागरविरचितं आर्हतभाष्यं संस्कृतभाषायामुपनिबद्धम्।

- **टिप्पणवाङ्मयम्–**

**१.न्यायदीपिकाप्रकाशाख्यटिप्पणम्–**

श्रीमता डॉ.दरबारीलालकोठिया महोदयेन श्रीमदभिनवधर्मभूषणयतिना विरचितस्य न्यायदीपिका ग्रन्थस्य प्रकाशाख्यटिप्पणं विलिखितम्। देहलीनगरे (सरसावा)स्थितया वीरसेवामन्दिरसंस्थया १९४५ तमे वर्षे हिन्द्यनुवादेन साकं प्रकाशनं विहितम्।

**२.आप्तपरीक्षालङ्कृतिः टिप्पणम्–**

श्रीमद्विद्यानन्दस्वामिविरचिता आप्तपरीक्षा इति जैनन्यायविषयकः सुविख्यातो ग्रन्थः। तदधिकृत्य अलङ्कृतिरिति टिप्पणं पं.डॉ.दरबारीलालकोठिया महोदयेन विलिख्य जैनन्यायजिज्ञासूनां कृते सरलीकरणेन साहित्यजगति महान्नुपकारो विहितः।

□□□

## षष्ठोऽध्यायः- विभिन्नसंस्कृतशाखासु अनूदितानां, सम्पादितानाञ्च संस्कृतकृतीनां योगदानम्।

मूलभूतप्राचीनजैनग्रन्थानां संशोधनपुरस्सरं सम्पादनं प्रकाशनं च जैनसाहित्ये पुराकालाज्जायमानं वर्तते। तथाहि सामान्यतया सम्पादितानां ग्रन्थानां बहुलतया विंशशतकस्थाचार्यकविमनीषिभिः प्रधानतया मुख्यभूतानां सम्पादितानाम् अनूदितानां चैव ग्रन्थानामत्र विस्तारभयात् विचारः कृतः।

- **सम्पादितग्रन्थाः-**

**१.दरबारीलालकोठिया** महोदयः स्याद्वादसिद्धिः, प्रमाणप्रमेयकलिका, अध्यात्मकमलमार्तण्डः इत्यादीनां मूलसंस्कृतन्यायग्रन्थानां संशोधनपुरस्सरं सटिप्पणं सम्पादनं कृतवान्। ग्रन्थाश्चेमे देहलीस्थितायाः भारतवर्षीयविद्वत्परिषद् संस्थया, वीरसेवामन्दिरसंस्थया च प्रकाशिताः।

**२.पन्नालालसाहित्याचार्य**पण्डितप्रवरेण मूलभूतजैनग्रन्थेषु जिनसेनाचार्यविरचितस्य आदिपुराणस्य (द्वितीयभागः), गुणभद्राचार्यविरचित- उत्तरपुराणस्य, रविषेणाचार्यविरचितस्य पद्मपुराणस्य (तृतीयभागः), जिनसेनाचार्यविरचितस्य हरिवंशपुराणस्य च सानुवादं सम्पादनं तत्रभवद्भिः कृतम्। मौलिकसंस्कृतपुराणानामेतेषां प्रकाशनं भारतीयज्ञानपीठसंस्थया साधितम्। आचार्यमानतुङ्गविरचितस्य भक्तामरस्तोत्रकाव्यस्य कल्याणमन्दिरस्तोत्रस्य, विषापहारस्तोत्रस्य, जिनचतुर्विंशतिस्तोत्रस्य एकीभावस्तोत्रस्य चेति पञ्चस्तोत्राणां **पञ्चस्तोत्रसङ्ग्रहः** इति नाम्ना संस्कृतटीकया साकं भारतवर्षीय- अनेकान्तविद्वत्परिषदा प्रकाशनं कारितम्। आचार्यसमन्तभद्रविरचितस्य रत्नकरण्डकश्रावकाचारस्य प्रदीर्घप्रस्तावनया साकं सम्पादनं प्रकाशनं च कविनाऽनेन कृतम्।

**३.महेन्द्रकुमारजैन** (शास्त्री, न्यायतीर्थः,न्यायाचार्यः) महोदयैः न्यायकुमुदचद्रः (द्वितीय-भागः), प्रमाणमीमांसा, अकलङ्कग्रथत्रयम्, प्रमेयकमलमार्तण्डः, न्यायविनिश्चयः, षड्दर्शनसमुच्चयः, प्रमाणप्रमेयकलिका, युक्त्यनुशासनं, आत्मानुशासनं, प्रभावकचरित्रं, जयधवला च इत्यादिमौलिकसंस्कृतजैनन्यायग्रन्थाः सम्पादिताः।

**४.डॉ. नेमिचन्द्र शास्त्री-**

**१.केवलज्ञानप्रश्नचूडामणिः** इति आचार्यसमन्तभद्रविरचितो त्रयोदशशताब्धीयः जैनज्योतिषशास्त्रीयग्रन्थो विद्यते। अत्र धातु-मूल-जीव-नष्ट-मूष्टि-लाभ-हानि-रोग-मृत्यु-शयन-भोजन-शकुन-जन्म-कर्म- अस्त्र-शल्य-वृष्टि- अतिवृष्टि- अनावृष्टि- सिद्धि-असिद्ध्यादि विषयाणां निरूपणं कृतं वर्तते। प्रश्नकर्तुः फलाफलस्य विचारः अत्र कृतो वर्तते। अस्य ग्रन्थस्य सानुवादं सम्पादनं डॉ.नेमिचन्द्र शास्त्री महोदयेन कृतम्।

**२.भद्रबाहुसंहिता** फलितज्योतिषे अष्टाङ्गनिमित्तविषयकं महत्त्वपूर्णमेकं ग्रन्थरत्नम्। अस्य प्रथमसप्तविंशत्यध्यायेषु निमित्तं तथा संहिताविषयकविचारः कृतो वर्तते। त्रिंशाध्याये अरिष्टानां विवेचनं कृतं विद्यते। ग्रन्थस्यास्य रचना श्रुतकेवलिभद्रबाहोः वचनानुरूपं भद्रबाहुविदुषा जातेति जैनमान्यता। अष्टशतकात्प्राग्विरचितेयं रचना भाति। अस्याः ज्योतिषविषयिन्याः रचनायाः सम्पादनं डॉ.नेमिचन्द्र शास्त्री महोदयेन कृतम्। निमित्तशास्त्रस्य अयमतीव महत्त्वपूर्णग्रन्थो वर्तते।

**३-५.व्रततिथिनिर्णयः अलंकारचूडामणिः, मुहूर्तदर्पण** [१] श्चेते ज्योतिषशास्त्रसम्बद्धाः ग्रन्थाः डॉ.नेमिचन्द्र शास्त्री महोदयेन सम्पादिताः।

[१].कृतिरियं पं.के.भुजवलीशास्त्रिवर्येणापि हिन्द्यनुवादसहिता सम्पादितोपलभ्यते।

**५.पं.डॉ.हीरालालजैन सिद्धान्तशास्त्री–**

(१)**सुदर्शनचरित**मिति श्रीविद्यानन्दिआचार्यविरचितं काव्यं पं.डॉ.हीरालालजैन सिद्धान्त-शास्त्री महोदयेन संशोधनपुरस्सरं सम्पाद्य प्रकाशितम्। काव्यस्यास्य विशेषो नाम काव्येऽस्मिन् सुदर्शनमुनेः चरित्रचित्रणपुरस्सरं जैनधर्मसम्बन्धिनः णमोकारमहामन्त्रस्य माहात्म्यं विशदीकृतं वर्तते। पञ्च–णमोकारमन्त्रस्य जैनधर्मे तथेव स्थानं महत्त्वं च वर्तते यद् वैदिकपरम्परायां गायत्रिमन्त्रस्य भवति। पञ्चणमोकारमन्त्रः जैनधर्मस्य प्राणतत्त्वं वर्तते। अस्य संक्षिप्तं प्राचीनं च रूपं ई.स.पूर्वद्वितीयशतकस्य खारवेलशिलालेखे, आ.पुष्पदन्तकृतषट्खण्डागमसूत्रे मङ्गलाचरणरूपेण वर्तते। भारतीयज्ञानपीठदेहलीतः ग्रन्थस्यास्य प्रकाशनं १९७०तमे वर्षे जातम्।

श्रीसकलकीर्तिराचार्यविरचितमिदं (२)**वीरवर्धमानचरितकाव्यं** पं.डॉ.हीरालालजैन सिद्धान्तशास्त्री महोदयेन संशोधनपुरस्सरं सम्पाद्य प्रकाशितम्। काव्यमिदं एकोणविशाधिकारैरध्यायैर्वा चतुर्विंशतमस्य तीर्थकरस्य चरित्रचित्रणं करोति। भारतीयज्ञानपीठदेहलीतः ग्रन्थस्यास्य प्रकाशनं १९७४तमे वर्षे जातम्।

**६.आर्यिकासुपार्श्वमती–**

सागारधर्मामृतं, अनगारधर्मामृतं, नयविवक्षा, रत्नत्रयचन्द्रिका, राजवार्तिकं, प्रमेयकमलमार्तण्ड इत्यादिकृतयः सानुवादं सम्पाद्य प्रकाशिताः वर्तन्ते। एतेषु (१)**सागारधर्मामृतं** (२)अनगारधर्मामृतं चेति ग्रन्थद्वयं क्रमशः श्रमण–श्रावकयोः आचारधर्मशास्त्रसम्बद्धग्रन्थद्वयं वर्तते। (३)**नयविवक्षा**, (४)**प्रमेयकमलमार्तण्ड**श्चेति जैनन्यायसम्बद्धकृती। रत्नत्रयचन्द्रिका राजवार्तिकं चेति दार्शनिककृती। इत्येवं आर्यिकासुपार्श्वमतीसाध्वीभिः विविधविधासु लिखितानां ग्रन्थानां हिन्द्यनुवादसहितं सम्पादनं विधाय सकलसाहित्यं जम्बूद्वीपशोधसंस्थानं, हस्तिनापुरतः प्रकाश्यतामानीयते।

**७.पं.लालारामशास्त्री–**

विंशशतकस्य संस्कृतसाहित्यसंवर्धने भवताममूल्यं योगदानं वर्तत इति निम्नलिखितग्रन्थसम्पादनसूच्या ज्ञातं भवति। भवद्भिः (१)आदिपुराणं, (२)उत्तरपुराणं, (३)शान्तिपुराणं इति **पुराणत्रिकस्य** सानुवादं सम्पादनं, (४)धर्मामृतश्रावकाचारः, (५)प्रबोधसारः, (६)चारित्रसारः, (७)आचारसारः (८)सुधर्मध्यानप्रदीपः, (९)सुधर्मश्रावकाचारः, (१०)मुनिधर्मप्रदीपश्चेति **ग्रन्थसप्तकस्य आचारधर्मशास्त्रसम्बद्धस्य** हिन्दिप्रस्तावनादिभिःसाकं सम्पादनं, तथैव (११)धर्मप्रश्नोत्तरं, (१२)जिनशतकं, (१३)पात्रकेशरीस्तोत्रं, (१४)संशयिवदनविदारणं, (१५)गौतमचरितं, (१६)सुक्तिमुक्तावली (१७) बृहत्स्वयम्भूस्तोत्रं (१८)सुभौमचरितं, (१९)चतुर्विंशतिसन्धानकाव्यं, (२०)चतुर्विंशतितीर्थकरमहास्तुतिः, (२१)चतुर्विंशतिस्तोत्रं, (२२)बोधामृतसारः, (२३)सुधर्मोपदेशामृतं, (२४)दशभक्तिः चेति **चतुर्दशसाहित्यिककृतीनां** सम्पादनं, (२५)तत्त्वानुशासनं, (२६)वैराग्यमणिमाला, (२७)द्वादशानुप्रेक्षा, (२८)दशलाक्षणिकजयमालश्चेति **चतुर्णां दार्शनिकग्रन्थानां** सम्पादनं, (२६) लघीयस्त्रयः **इत्येकस्य न्यायग्रन्थस्य** सम्पादनम् इत्येवंरूपेणाहत्य **षड्विंशतिकृतीनां सम्पादनं** विधाय प्रायः सकलप्राचीनार्वाचीनसाहित्यं स्वीयलेखिन्या सम्पादनकर्मणा आमूलं स्पृष्टम्।

**८.पं.फूलचन्द्र सिद्धान्तशास्त्री–**

पं.फूलचन्द्र सिद्धान्तशास्त्रिवर्यः विंशशतकस्य साहित्ययोगदाने अग्रगण्येषु अन्यतमः। अनेन (१)प्रमेयरत्नमाला, (२)आलापपद्धतिश्चेति जैनन्यायकृतिद्वयस्य, (३)षट्खण्डागमस्य सानुवादं सहसम्पादनं, (४)महाबन्धस्य (२–७)सम्पादनं, (५)सप्ततिकाप्रकरणं, (६)तत्त्वार्थसूत्रं, (८)सम्यग्ज्ञानदीपिका, (९)ज्ञानपीठपूजाञ्जलिः, (१०)कलशभावार्थेन सह समयसारस्य सम्पादनं, (११)सर्वार्थसिद्धिः, (१२)लब्धिसारक्षपणासारः (१३)ज्ञानसमुच्चयसारः

(१४)आत्मानुशासनम् (१५)कषायपाहुड(भागाः-१-१६) चेति त्रयोदशदार्शनिकग्रन्थानां सम्पादनं विधाय जैनसंस्कृतसाहित्ये महद्योगदानमाचरितं वर्तते।

## २.संस्कृतानूदितरचनाः-

### १.डॉ.कुसुमपटोरिया-

स्वरूपसम्बोधनपञ्चविंशतिः इत्येकः जैननैय्यायिकस्य आचार्याऽकलङ्कभट्टस्य जैनदर्शनसिद्धान्तप्रस्थापनपरो ग्रन्थः। आचार्यप्रवरेण अनेकान्तरूपस्य जैनसिद्धान्तस्य परिपोषणं अन्यमतखण्डनपुरस्सरं कृतं वर्तते। आचार्येण तार्किकचूडामणिना भट्टाकलङ्कदेवेन आत्मतत्त्वस्य परिचयः स्याद्वादविधिना ग्रन्थेऽस्मिन् कारितः। स्थले स्थले अर्थगौरवेन ग्रन्थस्यास्य गौरवो विवर्धमानो दृश्यते। विषयस्य गहनत्वात् दुरुहत्वात् च सामान्यजनानामस्य अध्ययनं सुदुष्करमासीत्। तत्तस्य ग्रन्थस्य अध्ययनदुष्करत्वं दूरीकर्तुम् आचार्यविरागसागरगुरोः सुयोग्यशिष्येण आचार्यश्रीविशुद्धसागरमुनीन्द्रेण विचारितं किञ्च, ग्रन्थस्यास्य हिन्दीभाषायां परिशीलनं लिखितुं व्यवसितम्। अस्मद्गुरोः आचार्यविशुद्धसागरस्य अनेन परिशीलनरूपहिन्दीविवरणेन आचार्यभट्टाकलङ्कस्यायं ग्रन्थः अस्मादृशानां सुकुमारमतीनां कृते सहजबोध्यः सञ्जातः।

संस्कृतप्राकृतभाषाविदुषी डॉ.कुसुम रा. पटोरिया इत्यनया महोदयया आचार्यविशुद्धसागरकृतस्य हिन्दीपरिशीलनस्य संस्कृतभाषायां सारभूतत्वेनाऽनुवादं विधाय स्वरूपसम्बोधनपञ्चविंशतिः ग्रन्थस्य जैनसंस्कृतन्यायजगति इतोऽप्यधिकं व्यापकत्वं साधितं वर्तते। आचार्यश्रीविशुद्धसागरस्य २०१३ वर्षस्य नागपुरस्थचतुर्मासकाले महोदयाभिः कार्यमेतत् महता परिश्रमेण समर्पणेन च साधितमिति संस्कृतविद्वत्सु महतो गौरवस्य विषयः। २०१३ तमे वर्षे दिगम्बरजैनखण्डेलवालप्रान्तीयसभा, नागपूरतः एतस्य प्रकाशनं सञ्जातम्।

**२.पं.श्री.श्रेयांसकुमारसिंघई–**

आचार्यकुन्दकुन्दस्य प्रवचनसारग्रन्थाधारेण पं.देवीदासवर्येण विरचितायाः प्रवचनसारभाषाकवित्वस्य (संस्कृतव्याख्यानस्य) सानुवादं सम्पादनं जयपुरनिवासिना पं.श्री.श्रेयांसजैनसिंघई महोदयेन कृतम्। प्रवचनसारः जैनाध्यात्मस्य उच्चकोटिको ग्रन्थो वर्तते। प्रस्तुतटीकाग्रन्थस्य प्रकाशनं २००६ तमे वर्षे जयपुरस्थिते भारतीयश्रुतिदर्शनकेन्द्रतो सम्पन्नम्।

□□□

## सप्तमोऽध्यायः- उपसंहारः।

अध्ययनेनानेन इदं ज्ञायते यज्जैनपरम्परायाः वाङ्मये संस्कृतभाषायाः अनन्यस्थानं वर्तत इति। प्राचीनकालादेव संस्कृतभाषायां मौलिकग्रन्थानां रचनाः जाताः। विशेषरूपेण पूज्यपादविरचितेन जैनेद्रव्याकरणग्रन्थेन संस्कृतव्याकरणसम्प्रदायेषु स्वीयं स्वतन्त्रं स्थानं कल्पितम्। जैनसंस्कृतव्याकरणानुसारं तात्कालीनैः जैनाचार्यैः मौलिकं पुराणसाहित्यं संस्कृतभाषायामेव विरचय्य इदं प्रमाणीकृतं यज्जैनवाङ्मयं न केवलं प्राकृतमेव आश्रयते स्म अपितु संस्कृतमाध्यमेनापि नैके मौलिकाः ग्रन्था तत्तत्काले विरचिताः आसन् विरच्यमाणाश्च सन्ति।

विंशशतकस्थजैनाचार्याणां कविमनीषिणां च रचितसाहित्याध्ययनेनानेन इदमत्र परिलक्षितं भवति यत् विंशशतके काले जैनकविमनीषिभिः 'न भूतो न भविष्यति' इत्येवंरूपेण विशेषतो महाकाव्यरूपेण, खण्डकाव्यरूपेण, चम्पूकाव्यरूपेण, लघुकाव्यरूपेण, स्तोत्रकाव्यरूपेण, शतककाव्यरूपेण, अष्टककाव्यरूपेण, चरितकाव्यरूपेण, मुक्तककाव्यरूपेण च मौलिकसंस्कृतग्रन्थाः व्याख्यानग्रन्थाश्च, सानुवादं सम्पादिताः प्रकाश्यताञ्चानीताः। साहित्यवाङ्मयलेखनस्य पुराकालिककेतिहासे न कस्मिन्नपि शतके एतावत्संख्यया ग्रन्थानां रचनाः कृता परिलक्ष्यते इति विशेषः।

द्वितीय-तृतीयशतके पुराकाले आचार्यसमन्तभद्रादिभिः जैनाचार्यैः यथा मौलिकन्यायग्रथरचनया साहित्यसेवा आचरिता तदपेक्षया विंशशतके जैनदार्शनिकमौलिकग्रन्थानां रचनाः मात्रायां अल्पीयस्यः विरचिताः इत्यपि स्पष्टं ज्ञायते। परं प्राग्विरचितमौलिकदार्शनिकग्रन्थाधारेण विविधटीकादिपुरस्सरं ग्रन्थसम्पादनस्य कार्यं विंशशतके कविमनीषिभिः विधाय श्रुतदेव्याः महती सेवा आचरिता इति विषयेऽपि अस्ति ऐकमत्यम्।

प्रबन्धे द्वितीयतृतीयसंख्ययोः अध्याययोः ग्रन्थरचयितॄणां जैनाचार्याणां कविमनीषिणां च व्यक्तगतसाहित्यिकोभयपरिचयप्रदानेन विषयावगमेऽऽकलने च सौविध्यं कल्पितं भवति। तथैव

द्वितीयभागे चतुर्थपञ्चषट्सु अध्यायेषु च ग्रन्थरचनानां सविशदपरिचयेन विषयावगमः सरलतां भजते इति समेषां कल्याणाय कृतिरियमस्तु इति शम्।

□□□

# संदर्भग्रन्थसूचिः

## आधारभूतग्रन्थसूचिः


१. जयोदयमहाकाव्यम्- आचार्यज्ञानसागर(पं.भूरामलशास्त्री)

२. वीरोदयमहाकाव्यम् - आचार्यज्ञानसागर(पं.भूरामलशास्त्री)

३. सुदर्शनोदयमहाकाव्यम्- आचार्यज्ञानसागर(पं.भूरामलशास्त्री)

४. भद्रोदयमहाकाव्यम् (समुद्रदत्तचरितमहाकाव्यम्)

५. श्रीभिक्षुमहाकाव्यम्- मुनि नथमलजी

६. शान्तिसिन्धिमहाकाव्यम्- आचार्य घासीलाल

७. श्रमणशतकम्- आचार्यविद्यासागरप्रणीतम्।

८. लोकाशाहमहाकाव्यम्- आचार्य घासीलाल

९. श्रीतुलसीमहाकाव्यम्- पं.रघुनन्दनशर्मा

१०. स्वर्णाचलमहाकाव्यम्- बालचन्द्रजैन शास्त्री

११. लोकाशाहमहाकाव्यम्- पं.मूलचन्द जैन

१२. साहित्यदर्पणः- आचार्यविश्वनाथः

१३. काव्यप्रकाशः- मम्मटाचार्यः

१४. आदिपुराणम् आचार्यजिनसेनविरचितम्


## सहायकग्रन्थसूचिः


१. **जैनसंस्कृतमहाकाव्यों में भारतीयजैनसमाज**, डॉ.मोहन चन्द, ईस्टर्न बुक लिंकर्स, दिल्ली, १९८६.

२. **रस इन दि संस्कृतमहाकाव्याज्,** डॉ.पुष्पा गुप्ता, ईस्टर्न बुक लिंकर्स, दिल्ली, १९९३.

३. **जैनसाहित्य का बृहद् इतिहास**, १-७ भाग, पार्श्वनाथविद्यापीठ, वाराणसी.

४. **संस्कृतकाव्यों के विकास में जैनाचार्यों का योगदान**, डॉ. नेमिचन्द्र ज्योतिषाचार्य,

५. **जैनाचार्यों का अलङ्कारशास्त्र में योगदान:** सम्पा.डॉ.कमलेशकुमारजी जैन, पार्श्वनाथ विद्याश्रम शोध संस्थान, वाराणसी, १९८४.

६. **बीसवीं सदी के संस्कृतविद्वान्,** डॉ.कलानिधि मिश्र, राधा पब्लिकेशन्स, दरियागंज, दिल्ली, २००७.

७. **बिसवीशती के जैनमनीषियोंका योगदान**, डा.नरेन्द्र राजपूत, आचार्यज्ञानसागरवागर्थविमर्श केन्द्र, ब्यावर (राज.) १९९६.

८. **संस्कृतभाषा के आधुनिक जैनग्रन्थकार**, पूज्यदेवर्धि जैन, चौखम्भा प्रकाशन, वाराणसी, २०१२.

९. **वीरशासन के प्रभावक आचार्य,** कस्तुरचंद कासलीवाल, भारतीयज्ञानपीठप्रकाशन, १९७५.

१०. **चिन्तामणित्रयसमीक्षा**, विरचित- डॉ.पन्नालाल जैन, सम्पादित-प्रो.भागचन्द्र जैन भागेन्दु, वीर सेवा मंदिर ट्रस्ट, जयपुर, २०००.

## ▪ शोधपत्र-पत्रिकाश्च

१. जैनमित्र (साप्ताहिकम्)वीरसंवत् २४९२, वैशाखसुदी ८

२. अनेकान्त(त्रैमासिकम्) वर्ष जून२००४, वीरसेवामंदिर, दरियागंज, दिल्ली.

३. The List of the Carita-kavyas of Modern Period, Shodhaganga.

४. न्यायाचार्य पं.दरबारीलाल कोठियाअभिनन्दनग्रन्थ, वाराणसी,१९८२.

५. पं.डॉ.महेन्द्रकुमार न्यायाचार्य अभिनन्दन ग्रन्थ, दमोह, १९९६.



**ग्रन्थसम्पादकस्य परिचयः**

**प्रा.डॉ.राजेन्द्र चिन्तामणी जैनः**

(जुलाई, २०१३तः) सहायकप्राध्यापकः,
संस्कृतभाषा तथा साहित्यविभागः, कविकुलगुरु-कालिदास-संस्कृतविश्वविद्यालयः, रामटेकम् (महाराष्ट्रराज्यम्)
(दूरध्वनिसंख्या- ९३७२०७१२९२)

- **जन्मदिनाङ्कः-** १९.०७.१९८२

- **शिक्षणम्-**

१. राजस्थानशिक्षाबोर्डतः उपाध्यायकक्षा (एकादशीकक्षा, द्वादशीकक्षा च)- २०००.
२. जगद्गुरुरामानन्दाचार्यसंस्कृतविश्वविद्यालयः, जयपुरतः शास्त्री (बी.ए.)- २००३.
३. राष्ट्रियसंस्कृतविद्यापीठं, तिरुपतितः साहित्याचार्यः (एम.ए.)- २००५.
४. राष्ट्रियसंस्कृतविद्यापीठं,तिरुपतितः शिक्षाशास्त्री (बी.एड्.)- २००६.
५. सावित्रीबाई फुले पुणेविद्यापीठं, पुणेतः संस्कृतभाषाशास्त्रपदविका- २००९.
६. सावित्रीबाई फुले पुणेविद्यापीठं, पुणेतः विद्यावाचस्पतिः (पीएच.डी.)- २०१२.
७. शिवाजी विद्यापीठं, कोल्हापूरतः एम.ए.(प्राकृतं जैनविद्या च)- २०१६
८. नेट(परम्परागतसंस्कृतविषये) तथा सेट परीक्षा- २०१०-२०११

- **प्राप्तपुरस्काराः सम्माननानि च-**

१. साहित्याचार्य(एम.ए.) कक्षायां चत्वारि स्वर्णपदकानि- २००५
२. दक्षिणभारतजैनसभा, सांगली/बेलगांव संस्थायाः आचार्यकुन्दकुन्दप्राकृतग्रन्थलेखन तथा संशोधनपुरस्कारः- २०१५.
३. श्रमणसंस्कृति संस्थानं, जयपुरसंस्थायाः श्रमणसंस्कृतियुवाविद्वत्पुरस्कारः- २०१७

- **कार्यानुभवः-**

१. पञ्चवर्षाणां पाठनानुभवः। २. सप्तवर्षाणां संशोधनानुभवः।